सतोनाम्ना पत्न्या जिनराजध्यानकृत्सहरिराजः।
पुत्रं मनःसुखाख्यं धर्म्माद्युत्पादयामास ॥१८॥
सति प्रभुत्वे पि मदो न यस्य रतिः परस्त्रीषु न यौवनेऽपि।
परोपकारैकनिधिः स साधुर्धर्म्मात्सुखः कस्य न माननीयः ॥१९॥
जैनेद्राङ्घ्रिसरोजभक्तिरचला बुद्धिर्विवेकान्विता
लक्ष्मीर्दीनसमर्पिता सकरुणं चेतः सुधायुग्वचः।
रूपं शीलयुतं परोपकरणव्यापारनिष्ठं वपुः
शास्त्रं चापि मनःसुखे गतमदं काले कलौ दृश्यते ॥२०॥
संघभारधरो धीरः साधुर्वासाधरः सुधी।
सिद्धये श्रावकाचारमचीकरदमुं मुदा ॥२१॥
यावत्सागरमेखला वसुमती यावत्सुवर्णाचलः
स्वर्गांगरी कुलसंकुगमित(?)..........।
चिन्तास्क(?)..........लोकप्रकाशोद्यतो
तावन्नदतु पुत्र-पौत्रसहितो वासाधरः श्रावकः ॥२२॥

[ आमेर-प्रति

## १५. महापुराण-टीका (भ० ललितकीर्ति)

**आदिभाग:—**

नत्वा श्रीमज्जिनेशानं लोकालोकप्रकाशकम्।
टीका महापुराणस्य कुर्वे स्वाभीष्टसिद्धये ॥१॥

अथ श्रीमज्जिनसेनाचार्य श्रीमद्गुणभद्राचार्यवर्यससेवितपाद-पंकेरुहयुग्मो रत्नत्रयमडितमूर्तिर्निःशेषविघ्नसमाप्त्यर्थं भगवन्नमस्क्रियारूपं मंगलमाचष्टे।........

**अन्तभाग:—**

वर्षे सागरनागभोगिकुमिते (१८७४) मार्गे च मासेऽसिते
पक्षे पक्षति-सत्तिथौ रविदिने टीका कृतेयं वरा।

काष्ठासंघवरे च माथुरवरे गच्छे गणे पुष्करे
देवः श्रीजगदादिकीर्तिरभवत्ख्यातो जितात्मा महान् ॥१॥
तच्छिष्येण च मंदतान्वितधिया भट्टारकत्वं यता
शुभद्रै ललितादिकीर्त्यभिधया ख्यातेन लोके ध्रुवम् ।
राजच्छ्रीजिनसेनभाषितमहाकाव्यस्य भक्त्या मया
सशोध्यैव सुपठ्यता बुधजनैः क्षान्तिं विधायादरात् ॥२॥

## १६. पंचनमस्कार-दीपक (भ० सिंहनन्दि)

**आदिभाग :—**

नमाम्यर्हन्त देवेशं लक्ष्मीरात्यतिकी स्वयं ।
यस्य निर्द्धूत-कर्मेन्ध-धूमस्यापि विराजते ॥१॥

**अन्तभाग :—**

श्रीमूलसंघे वरपुष्कराख्ये गच्छे सुजातः शुभचन्द्रसूरिः ।
तस्याऽत्र पट्टेऽजनि सिंहनन्दिर्भट्टारकोऽभूद्विदुषां वरेण्यः ॥५३॥
तेनेद रचितं ग्रंथं नाम्ना पचनमस्कृति-
दीपकं विस्तरभिया संक्षिप्तं चाल्पमेधसा ॥५४॥
अब्दैस्तत्त्वरसर्तुचन्द्रकलिते (१६६७) श्रीविक्रमादित्यजे
मासे कार्तिकनामनीह धवले पक्षे शरत्संभवे ।
वारे भास्वति सिद्धनामनि तथा योगेषु पूर्णातिथौ
नक्षत्रेऽश्विनिनाम्नि तत्त्वरसिकः पूर्णाकृतो ग्रंथकः ॥५५॥
श्लोकं सहस्रगणितं वक्तुः श्रोतुः सुखप्रदं ।
ग्रन्थस्य पचनत्याख्यदीपकस्याऽस्य तिष्ठता ॥५६॥
इति बहुतरमपि फलविस्रयं पंचनमस्कारग्रन्थे संक्षिप्य पूर्णीकृतं ।

## १७. द्विसंधानकाव्य-टीका (प० नेमिचन्द्र)

आदिभाग :—

श्रीमान् शिवानन्दनयीशवंद्यो भूयाद्विभूत्यै मुनिसुव्रतो वः ।
सद्धर्मसंभूतिनरेन्द्रपूज्यो भिन्नेन्द्रनीलोल्लसदंगकांतिः ॥१॥
जीयान्मृगेन्द्रो विनयेन्दुनामा संवित्सदाराजितकंठपीठः ।
प्रत्तीववादीभ-कपोलभित्ति प्रमाक्षरैः स्वैर्नखरैर्विदार्य ॥२॥
तस्याथ शिष्योऽजनि देवनन्दी सद्ब्रह्मचर्यव्रत-देव-नन्दी ।
पादाम्बुजद्वंद्वमनिद्यमर्च्यं तस्योत्तमागेन नमस्करोमि ॥ ३ ॥
त्रैलोक्यकीर्तेश्चरणारविंदं पारं भवार्णोधितटी[1] प्रणम्य ।
पिपासता राघव-पाडवीया टीका करिष्ये पदकौमदी ता ॥४॥

अन्तभाग :—

इति निरवद्यविद्यामण्डनमण्डित-पण्डितमण्डली-मण्डितस्य षट्तर्क-चक्रवर्तिनः श्रीमद्विनयचन्द्रपण्डितस्य गुरोरतेवासिनो देवनन्दिनाम्नः शिष्येण सकलकलोद्भव-चारुचातुरी-चंद्रिकाचकोरेण नेमिचन्द्रेण विरचिताया द्विसंधानकवेर्धनंजयस्य राघवपाडवीयापरनाम्नः[2] काव्यस्य 'पद-कौमुदी'नाम दधानाया टीकाया श्रीरामकृष्णयुधिष्ठराभ्युदयवर्णनं[3] नामाष्टादशः सर्गः समाप्तः ॥१८॥

## १८. ज्ञानसूर्योदय-नाटक (भ० वादिचन्द्र)

आदिभाग :—

अनाद्यनन्तरूपाय पञ्चवर्णात्ममूर्त्तये ।
अनंतमहिमाप्ताय सदौंकार नमोस्तु ते ॥१॥

---

१ 'पारे नयार्णोदधिसं' इति आरा सि० भ० प्रतौ पाठः ।
२ 'राघवपाडवीयाभिधानस्य' इति आरा सि० भ० प्रतौ पाठः ।
३ 'नायकाभ्युदय-रावण-जरासंध-वर्णनं' इति आ० सि० भ० प्रतौ पाठः ।

तस्मादभिन्नरूपस्य वृषभस्य जिनेशतुः ।
नत्वा तस्य पदाभोज भूषिताऽखिलभूतल ॥२॥
भूपीठभ्रातभूताना भूयष्ठानददायिनी ।
भजे भवापहा भाषा भवभ्रमणभजिनीं ॥३॥
येषा ग्रन्थस्य सदर्भो प्रांस्फुरीति विदा हृदि ।
ववदे तान् गुरून् भूयो भक्तिभारनमच्छिर. ॥४॥

नाद्यते सूत्रधार —आदिष्टोस्मि ।

ब्रह्मश्रीकमलसागर—ब्रह्मश्रीकीर्तिसागराभ्या सकलागमामवारिधि-चद्रावताराणा सरस्वतीगच्छश्रृ गारहाराणा श्रीमन्मूलसंघोदयाद्रिप्रकटन-प्रभाकराणा चचच्छिखि-शिखडशोभितकरकमलाना त्रिविद्यविद्याचक्रवर्तिना दिगम्बरशिरोमणीना श्रीमत्प्रभाचन्द्रसूरीश्वराणा शिष्यैरस्मद्गुरुभिश्च श्रीमद्वादिचन्द्रसूरिभिर्निर्माय ज्ञानसूर्योदयं नामनाटक प्रदत्तमासीत् तत्सभ्याना पुरतोऽभिनेतव्य अस्ति चाधुना सर्वेषा कुतूहललालस चेतः । इति प्रस्तावः ।

अन्तभाग :—

मूलसघे समासाद्य ज्ञानभूषं बुधोत्तमाः ।
दुस्तर हि भवाभोधिं सुतरि मन्वते हृदि ॥१॥
तत्पट्टामलभूषण समभवद्दिगम्बरीये मते
चंचद्बर्हकरः स भाति चतुरः श्रीमत्प्रभाचन्द्रमाः ।
तत्पट्टेऽजनि वादिवृन्दतिलकः श्रीवादिचन्द्रो यति-
स्तेनाय व्यरचि प्रबोधतरणिर्भव्याब्जसबोधन ॥२॥
वसुवेदरसाब्जाके (१६४८) वर्षे माघे सिताष्टमी-दिवसे ।
श्रीमन्मधूकनगरे सिद्धोऽय बोधसंरभः ॥३॥ १८३॥

इति सूरिश्रीवादिचन्द्र विरचिते ज्ञानसूर्योदयनाटके चतुर्थोऽध्यायः॥४॥

सपूर्णोय ग्रन्थः । स्वस्ति ।

तच्छिष्यो सप्रधारी(?)विबुधजनमनोहर्षसदानदत्तो
दत्तोऽथैरामनामा विधिरमुमकरोत्पूजनाया विधेश्च ॥१॥
श्रीजयसिंहभूपस्य मंत्रिमुख्योऽग्रणीः सता ।
श्रावकस्ताराचद्राख्यस्तेनेद व्रतसमुद्धृतं ॥२॥
तदवसरमुद्दिश्य पूर्व्वशास्त्रानुवृत्तित ।
व्रतोद्योतनमेतेन कारितं पुण्यहेतवे ॥३॥
अब्दे द्विशून्याष्टैकाके (१८००) चैत्रमासेसिते दले ।
पचम्या च चतुर्दश्या व्रतस्योद्योतन कृत ॥४॥

इति प्रतिमासान्तचतुर्दशीव्रतोद्यापनविधि-पूजा जयमाला संपूर्ण ।

## २१. त्रिभंगीसारटीका ( सोमदेवसूरि )

**आदिभाग :—**

सर्वज्ञ करुणार्णवं त्रिभुवनाधीशार्च्यपाद विभु
यज्जीवादिपदार्थसार्थकलने लब्धप्रशस सदा ।
त नत्वाऽखिलमगलास्पदमहं श्रीनेमिचन्द्र जिन
वक्ष्ये भव्यजनप्रबोधजननीं टीका सुबोधाऽभिधा ॥१॥

जिनेन्द्रवक्त्राम्बुरुहाद्विनिर्गता स्याद्वादरूपा गुणशालिनीं सदा।
निरस्य जाड्य प्रददाति या मतिं ता भारतीं नौमि परंपवित्रा ॥२॥
कर्म्मद्रुमोन्मूलनदिक्करीन्द्र सिद्धान्तपाथोनिधिदृष्टपार ।
षट्त्रिंशदाचार्यगुणैः प्रयुक्तं नमाम्यहं श्रीगुणभद्रसूरिं ॥३॥

या पूर्वा श्रुतटीका कर्णाट[सु]भाषया विहिता ।
लाटीयभाषया सा विरच्यते सोमदेवेन ॥४॥
अतीन्द्रियसुखप्राप्त्यै निर्मुक्तैर्जन्मसततेः ।
भाविता जायते सम्यग्भावना बंधमोक्षयोः ॥५॥

प्रणिपत्य नेमिचन्द्र वृषभाद्यान् वीरपश्चिमाञ्जिनान् सर्वान् ।
वक्ष्ये सुभाषयाऽह विशदा टीका त्रिभंग्याया ॥६॥

अन्तभाग :—

अमितगुणगणः साध्वीभदेवाब्धिसोमः
विजयनिवरत्नं काममुद्योतकारी ।
गतकलिलकलंकः सर्वदा यः स्ववृत्तः
स जयति जिनबिंबस्थापनाचार्यचार्याः(वर्यः) ॥१॥

यथाऽमरेन्द्रस्य पुलोम[जा]प्रिया नाराय[ण]स्याब्धिसुता बभूव ।
तथाभदेवस्य वैजैणिनाम्नी प्रिया सुधर्मा सुगुणा सुशीला ॥२॥
तयोः सुतः सद्गुणवान् सुवृत्तः सोमोऽभिधः कौमुदवृद्धिकारी ।
व्याघेरवालंबुनिधेः सुरत्नं जीयाच्चिरं सर्व्वजनीनवृत्ति ॥३॥
श्रीमज्जिनोक्तानि समंजसानि शास्त्राणि लेभे स यथात्मशक्त्या ।
श्रीमूलसंघाब्धिविवर्द्धनेन्दोः श्रीपूज्यपाद-प्रभुसत्प्रसादात् ॥४॥

न ज्ञातृत्वाभिमानेन न यशःप्रसरेच्छया ।
कृतिः किन्तु मदीयेयं स्वबोधायैव केवलं ॥५॥
शब्दशास्त्रविरोधं यत् यदागमविरोधि च ।
न्यूनाधिकं च यत्प्रोक्तं शोधितं तन्मनीषिभिः ॥६॥
श्रीसद्माङ्घियुगे जिनस्य नितरां लीनः शिवाशाधरः ।
सोमः सद्गुणभाजनं सविनयः सत्पात्रदाने रतः ॥
सद्रत्नत्रययुक् सदा बुधमनो(जना)ह्लादी चिरं भूतले ।
नंद्यात्तेन विवेकिना विरचिता टीका सुबोधाभिधा ॥

इति त्रिभंगीसारटीका समाप्ता ।

## २२. यशोधरचरित्र ( भ० श्रुतसागर )

आदिभाग :—

विद्यानंदीश्वरं देवं नाभिराजसमुद्भवं ।
स्तुवेहं मरुदेव्यंगसंभवं वृषभं जिनं ॥१॥

अकलंक जिनाधीशमजितं विजयात्मजं।
जितशत्रुमहाराजनंदनं प्रणमाम्यहं ॥२॥
समंतभद्रं सर्वज्ञं स्वस्ति श्रावस्तिसंभवं।
दृढराज-सुषेणोत्थं संभवं चिंतयाम्यहं ॥३॥
शिवकोटिप्रदं वंदे शरण्यमभिनंदनं।
स्वयंवर-महाराज-सिद्धार्था स्वामिनी-सुतं ॥४॥
उमास्वामिनमर्हंतं श्रयामि सुमतीश्वरं।
श्रीमेघरथराजेंद्र-मंगलांज सुमंगलं ॥५॥
भद्रबाहुं जगद्भद्रं भजे पद्मप्रभं विभुं।
कौशांबी-धरणाधीश-सुसीमा-सुतनूद्भवं ॥६॥
गुप्तिगुप्तं पुरीकाशीपतिश्रीप्रतिष्ठितं।
सुपार्श्वं पृथिवीषेणा-सुतनीलांग[भं] भजे ॥७॥
( ग्रन्थ सामने न होनेसे अगले पद्य नहीं दिये जा सके। )

अन्तभाग :—

श्रीमद्वीरजिनेन्द्र-शासन-शिरोरत्नं सतां मंडनं
साक्षादक्षयमोक्षकारि करुणाकृन्मूलसंघेऽभवत्।
वंशे श्रीमत्कुंदकुंदविदुषो देवेन्द्रकीर्तिर्गुरुः
पट्टे तस्य मुमुक्षुरक्षयगुणो विद्यादिनंदीश्वरः ॥२७१॥
तत्पादपावनपयोरुहमत्तभृंगः श्रीमल्लिभूषणगुरुर्गरिमप्रधानः।
संप्रेरितोहममुनाभयरुच्यभिख्ये भट्टारकेण चरिते श्रुतसागराख्यः ॥२७२॥
ज्ञात्यार्जवादिगुणवेश्म तपोनिधानं चारित्रसद्म करुणानिधिराप्तपूज्यः।
सद्धर्ममूर्तिरिह सोपि महेन्द्रकीर्तिराचार्यवर्यविनुतो [ऽनु]मतं चकार॥२७३॥
विद्यादिनंदिगुरुपूर्वगिरा च भक्त्या।
संप्रार्थितश्च मुनिनाऽमरकीर्तिनाम्ना।
श्रीरत्नराज-ऋषिणा गुरुभक्तिभाजा
राजाधिराज-नत पादकंज-द्वयेन ॥२७४॥

तर्क व्याकरणार्हत-प्रविलमत्सिद्धांतगारामल-
छंदोलंकृतिपूर्वनव्यकृतधीसश्रव्यकाव्योच्चये ।
चचारुधिया प्रमोदितमतिर्भूयः कृताभ्यर्थनः
साधुश्रीमतिसागरेण कृतवानेतच्चरित्र शुभ ॥२७५॥
गधारसारनगरे मघाभ्यर्च्चनमनेकशः शुचा(श्रुत्वा) ।
श्रुतसागरेण रचितं शास्त्रमिदं सिद्धिदं भवतु ॥२७६॥

इति श्रीभट्टारकश्रीविद्यानंदि-प्रियशिष्यसूरिश्रीश्रुतसागर-विरचिते यशोधरमहाराजचरिते अभयरुच्याऽभयमति-मारदत्त-यशोमति-कल्याणमित्र-कुसुमावली-श्रीसुदत्तभट्टारक-स्वर्गगमनवर्णनं नाम चतुर्थः परिच्छेदः ।

[ आमेर-प्रति

## २३. भविष्यदत्तचरित्र ( विबुध श्रीधर )

आदिभाग :—

श्रीमतं त्रिजगन्नाथ नमामि वृषभं जिन ।
इन्द्रादिभिः सदा यस्य पादपद्मद्वयी नता ॥१॥

( आगे चन्द्रप्रभ, शान्ति, पार्श्व, महावीर आदिकी स्तुति है )

यज्जिनेन्द्रमुखोद्गीत यद्गणेशप्रकाशितं ।
यन्मुनीन्द्रगणैर्ग्रंथे कथितं ग्रंथनंदिभिः ॥८॥
श्रेमद्वेदोमयूताया(?)स्थितेन नयशालिना ।
श्रीलबकञ्चुकाऽनूकनभोभूपणभानुना ॥९॥
प्रसिद्धसाधुधामैकदनुजेन दयावता ।
प्रवरोपासकाचार विचाराहित-चेतसा ॥१०॥
गुरुदेवार्चनादानध्यानाध्ययनकर्मणा ।
साधुना लक्ष्मणाख्येन प्रेरितो भक्तिसयुता ॥११॥
तदहं शक्तितो वक्ष्ये चरित दुरितापह ।
श्रीमद्भविष्यदत्तस्य कमलश्रीतनूभुवः ॥१२॥

समोपरोधतः सत' शृण्वतु स्थिरमानसाः ।
निःश्रेयसाय मुञ्चतु खलभाव खलाह्दः (?)॥१३॥

अन्तभाग :—

चन्द्रप्रभस्य जगतामधिपस्य तीर्थे यातेयमद्भुतकथा कविकठभूषा ।
विस्तारिता च मुनिनाथगणैः क्रमेण ज्ञाता मयाप्यपरसूरिमुखाम्बुजेभ्यः ॥५१॥
भक्त्याऽत्र ये चरितमेतदनूनबुद्धया शृण्वंति संसदि पठति च पाठयंति ।
दत्वा धन निजकरेण च लेखयति व्युद्ग्राहभावरहिताश्च लिखति सतः॥५२॥
ते भवति वलक्ष्णशुद्धा. श्रीधरामलमुखा जनमुख्याः ।
प्राप्तचिंतितसमस्तसुखार्थाः शुभ्रकीर्तिधवलीकृतलोकाः ॥५३॥

इति श्रीभविष्यदत्तचरिते[1] विबुधश्रीधर-विरचिते साधुलक्ष्मण-नामाकिते श्रीवर्द्धन-नंदिवर्द्धन-मोक्षगमनवर्णन नाम पञ्चदशः सर्गः समाप्तः ॥

## २४. त्रिलोकसार-टीका ( सहस्रकीर्ति )

आदिभाग :—

यस्योक्ति-शीतलसुधारसविप्रमगाज्जन्माग्नितापपरितापित-भव्यजीवः ।
निर्वान्ति नेमिमवनम्य मुनीन्द्रचन्द्र त्रैलोक्यसारवरवृत्तिमह करिष्ये ॥२॥

सकलसैद्धान्तिकचक्रचूडामणि-श्रीनेमिचन्द्रभट्टारकोऽभिमतदेवना-श्रीनेमिजिननमस्कारप्रतिपादनार्थं निर्विघ्नाभिप्रेतार्थसिद्ध्यर्थं च स्वशास्त्रादौ नमस्कारमाह ।

अन्तभाग —

असापल्यां सुधीः साधुत्रोसुपूज्य-जिनालये ।
सहस्रकीर्तिराख्यातो नानाभव्यावबोधनः ॥१॥

---

१ इस ग्रन्थकी एक जीर्णप्रति, संवत् १४८६ आषाढ वदि ६ गुरुवारकी लिखी हुई, देहली-धर्मपुराके नया मन्दिरमें मौजूद है, जिसमें प्रारंभके दो पत्र नहीं और कुछ पत्र जीर्णोद्धार द्वारा नये भी शामिल किये गये हैं ।

तेनाकृते त्रिजगती वय-बुद्धि-वृद्धा वृत्तिर्दिगम्बरधरार्णवकर्णकीर्णा ।
यावज्जगद्धृतमिदं मरुता श्रयेण तावत्सतामियमलं मुदमातनोतु ॥२॥

इति त्रैलोक्यसार-टीका समाप्ता ।

## २५. धर्मपरीक्षा (रामचन्द्र मुनि)

आदिभाग :—

प्रणिपत्य जिनं भक्त्या स्याद्वादवरनायकम् ।
कथा धर्मपरीक्षाख्यामभिधास्ये यथागमम् ॥१॥

अन्तभाग :—

इति श्रीरामचन्द्रेण मुनिना गुणशालिना ।
ख्याता धर्मपरीक्षा सा कृता कृतिरियं ततः ॥१॥
श्रीपूज्यपादसद्वंशे जातोऽसौ मुनिपुंगवः ।
पद्मनन्दी इति ख्यातो भव्यव्यूह-प्रवन्दितः ॥२॥
तच्छिष्यो रामचन्द्राख्यो भद्रश्चास्तगुणान्वितः ।
वेदिता सर्वशास्त्राणां ख्यातो धर्मरताशयः ॥३॥
स च शुद्धव्रतोपेतः समयादिविवर्जितः ।
समयः सर्वसत्त्वाना तत्प्रार्थनवशाद्वरः ॥४॥
यावद्व्योम्नि प्रवर्त्तन्ते शशाकरवितारकाः ।
तावद्धर्मपरीक्षेय वर्तिष्यति सदाशये ॥५॥
पद्मनिवासभूता हि कथा पद्मायनी वरा ।
तथा धर्मपरीक्षा च मिथ्यात्वाज्ञानवासिनी ॥६॥

इति धर्मपरीक्षाकथा समाप्ता ।

## २६. करकण्डुचरित्र ( भ० जिनेन्द्रभूषण )

आदिभाग :—

पार्श्वनाथजिनं वन्दे विश्वविघ्नौघनाशनम् ।
कमठोपसर्ग-दैत्यारि-नाशन सौख्य-कारणम् ॥१॥

अन्तभाग :—

वक्तु सर्वमिह क्षमः किल भवेत्कस्योत्तमा भारती ॥१५॥

इति श्रीमुमुक्षु सिद्धान्तचक्रवर्ति-श्रीकुन्दकुन्दाचार्यानुक्रमेण श्रीभट्टारक-विश्वभूषण-विरचिते श्रीमज्जिनेन्द्रपुराणान्तर्गत-भगवत्पूजाफल-व्यावर्णने श्रीकरकण्डु-सहस्रारकासिवर्णनो नाम चतुर्थोधिकारः सम्पूर्णः ।

करकण्डुकथा सम्पूर्णा ।

## २७. अनन्तजिन-व्रतपूजा ( भ० गुणचन्द्र )

आदिभाग :—

श्रीसर्वज्ञं नमस्कृत्य सिद्धं साधूंस्त्रिधा पुनः ।
अनन्तव्रतमुख्यस्य पूजां कुर्वे यथाक्रमम् ॥१॥

अन्तभाग :—

इत्यनतविधेः पूजा व्यरचद्गुणचन्द्रक ।
श्लोकः सप्तशती पंचसप्तत्यूना यतीश्वरः ॥१॥
संवत्षोडशत्रिंशत्रैष्यफलके(१६३३) पक्षेऽवदाते तिथौ
पक्षत्या गुरुवासरे पुरुजिनेट्-श्रीशाकमार्गे पुरे ।
श्रीमद्हुम्बडवंशपद्मसविता हर्षाख्यदुर्गो वणिक्
सोय कारितवाननंतजिनसत्पूजां वरे वाग्वरे ॥२॥

श्रीमूलसंघेघविघातिनीह प्रद्योतमानेऽन्यमतानि नेशुः ।
सारस्वतो गच्छ इहैव नंद्यात् श्रीमद्बलात्कारगणाभियुक्ते ॥३॥
श्रीरत्नकीर्तिभगवज्जगता वरेण्यश्चारित्ररत्ननिवहस्य बभार भारम् ।
तद्दीक्षितो यतिवरो यशकीर्तिकीर्तिश्चारित्र जितजनोद्धहिता सुकीर्तिः ॥४॥

तच्छिष्यो गुणचद्रसूरिरभवच्चारित्रचेतोहर-
स्तेनेदं व्रतपूजनं जिनवरानन्तस्य युक्त्याऽरचि ।
येऽत्र ज्ञानविकारिणो यतिवरास्तै शोध्यमेतद्ध्रुवं
नद्यादारविचद्रमक्षयतरं संघस्य मांगल्यकृत् ॥५॥

इत्याचार्यगुणचद्रविरचिता श्रीअनन्तनाथजिनपूजा उद्यापनसहिता समाप्ता ।

## २८. पद्मपुराण ( भ० धर्मकीर्ति )

आदिभाग :—

शक्राली-मौलि-रत्नांशु-वारिधौत-पदाम्बुजं ।
ज्ञानादिमहिमव्याप्तविष्टप त्रिष्टपाधिपं ॥१॥
मुनिसुव्रतनामानं सुव्रताराधितक्रम ।
वंदे भक्तिभरानम्रः श्रेयसे श्रेयसि स्थितं ॥२॥

अन्तभाग :—

अथाभवन्मूलसुसंघ एव गच्छे सरस्वत्यधिके(भिधे) गणे च ।
बलात्कृतौ श्रीमुनिपद्मनन्दी श्रीकुंदकुंदान्वयजप्रसूतिः ॥२४॥
देवेन्द्रकीर्तिश्च बभूव तस्य पट्टे महिष्टे सुमहानुभावः ।
त्रिलोककीर्तिस्तत तत्र(एव) दीक्षो भट्टारकस्तत्पदलक्ष्यनिष्ठः ॥२५॥
सहस्रकीर्तिर्मुनिवृन्दसेव्यस्तत्पट्टपाथोधिनिशाधिनाथः ।
तदीयशिष्यः पद-पद्मनन्दी बभूव नाम्ना मुनिपद्मनन्दी ॥२६॥
पट्टे तदीयेऽखिलसंघसेव्यो यशःसुकीर्तिः शुभकीर्तिसिंधुः ।
बभूव भट्टारक-तत्पदस्थो मुनिः स्मरारेः हनने प्रवीणः ॥२७॥
तत्पट्टपंकेजविकाशनेयः साम्यं बिभर्तीह सहस्रभानोः ।
हतस्मरार्जितदुःकषायो(?) विनष्टदुर्भावचयो महात्मा ॥२८॥
य वीक्ष्य लोके व्रतभासुरांग तपस्विनं शास्त्रविदं मुनीशं ।
भजंति मिथ्यात्वचयं न जातु क्रियापरं शीलनिधिं सुशांतं ॥२९॥
य सेवमाना सतत सुशिष्या विज्ञात-तत्त्व-व्रत-भासुरांगाः ।
भवंति नूनं जगती-प्रकाशास्तपःकृशांगा रविणो गुणौघैः ॥३०॥
यं सेवमानः समकुक्षिजातं मुनीशमासीदुद्धररत्नपालः ।
पटुत्व-वाग्मित्व-कवित्व-वेत्ता ...... सद्गुणरत्नगात्रं ॥३१॥
एवं विधोऽसौ मुनिसंघसेव्यो भट्टारको भासितदिक्समूहः ।
संघस्य कल्याणनतिः प्रदेया नाम्ना गुरुः श्रीललितादिकीर्तिः ॥३२॥

तच्छिष्यस्तत्पदस्थो व्रतमिचययुतो जैनपादाब्जभृंगो
नाम्ना धर्मादिकीर्तिर्मुनिविमलमनास्तेन चैतत्पुराण ।
स्वल्पप्रज्ञेन दृब्ध निजदुरितचय-प्रज्ञयाय हिताय
भव्याना च परेषा श्रवण-सुपठने प्रोद्यतानामजस्त्र ॥२३॥
मूलकर्ता पुराणस्य श्रीजिनश्चोत्तरस्तथा ।
गणीशो यतयोन्ये च उत्तरोत्तरकर्तृका ॥३४॥
इद श्रीरविषेणस्य पुराण वीक्ष्य निर्मितः ।
चिर स्थेयात् क्षितौ भव्यै श्रुतं चाधीतमन्वह ॥३५॥
सवत्सरे द्व्यष्टशते मनोज्ञे चैकोनसप्तत्यधिके(१६६६) सुमासे ।
श्रीश्रावणे सूर्यदिने तृतीयातिथौ च देशेषु हि मालवेषु ॥३६॥

× × × ×

इति श्रीपद्मपुराणे भट्टारकश्रीधर्मकीर्तिविरचिते पद्मदेवनिर्वाणगमनं नाम चतुश्चत्वारिंशः पर्वः ॥४४॥

## २६. हरिवंशपुराण (भ० धर्मकीर्ति)

आदिभाग —

श्रीमंत त्रिजगन्नाथ नेमिनाथं जिनाधिपम् ।
अरिष्टखडने नेमिं वन्देऽनन्तगुणार्णवम् ॥१॥
पुरुदेवादि-वीरान्तान् शेषास्तीर्थंकरान्मुदा ।
वन्देऽनन्तगुणालीढान्प्रातिहार्यादिभूषितान् ॥२॥
सप्तत्यग्रशतक्षेत्र्यान्सतो भूतान्भविष्यतः ।
नमामि श्रीजिनान् घातिकर्मसघातघातकान् ॥३॥
सिद्धानष्टगुणोपेतान्पचाचारादिसंगतान् ।
आचार्यान्पाठकान्वदे तथासाधूंस्तपोधनान् ॥४॥
जिनेन्द्र-वक्त्र-सजाता सुरासुरमुनीडिताम् ।
भारतीं नौमि दुर्जाड्य-नाशिनीं विश्वदीपिकाम् ॥५॥

वन्दे वृषभसेनादीन् गौतमान्तान् गणेशिनः ।
चतुर्ज्ञानधरान्सम्यक् पूर्वाङ्ग-रचनोद्यतान् ॥६॥
कुन्दकुन्दादिकाचार्यान् कवीन्द्रान्नौमि भक्तितः ।
प्रदीपायितमेतत्र (?) यैर्मिथ्यात्वतमोवृते ॥७॥
तथा ललितकीर्त्याख्यमीडे भट्टारक गुरुम् ।
क्रियते यत्प्रसादेन कृतिरेषा बुधोचिता ॥८॥

अन्तभाग :—

वीरेणोक्तं पुरा चैतद्गौतमाद्यैस्ततोऽखिलम् ।
श्रुतकेवलिभिस्तद्वत्ततः श्रीगुणभद्रकैः ॥९०॥
सक्षेपेण च तद्वीक्ष्य प्रोक्तं तच्च मया पुनः ।
उक्तमेतच्चिर नंद्यात्पठितं पाठित बुधैः ॥९१॥

नानाकथातत्त्वरहस्यपूर्णं पूजाव्रतत्याग-तपोगुणाढ्यम् ।
स्वर्गोपवर्गोरुनिदानभूतं पुराणमेतत्सुचिरं प्रजीयात् ॥९२॥
श्रीमूलसंघेऽजनि कुन्दकुन्दः सूरिर्महात्माखिलतत्त्ववेदी ।
सीमधरस्वामिपदप्रवन्दी पञ्चाह्वयो जैन-मत-प्रदीपः ॥९३॥
तदन्वयेऽभूद्यशकीर्तिनामा भट्टारको भाषितजैनमार्गः ।
तत्पट्टवान् श्रीललितादिकीर्तिर्भट्टारकोऽजायत सत्क्रियावान् ॥९४॥

जयति ललितकीर्तिर्ज्ञाततत्त्वार्थसार्थो
नय-विनय-विवेक-प्रोज्वलो भव्यबन्धुः ।
जनपदशतमुख्ये मालवेऽलं यदाज्ञा
समभवदिह जैन-द्योतिका दीपिकेव ॥९५॥
तत्पट्टाम्बुजहर्ष-वर्ष-तरणिर्भट्टारको भासुरो
जैनग्रन्थविचार-केलिनिपुणः श्रीधर्मकीर्त्याह्वयः ।
तेनेदं रचित पुराणममल गुर्वाज्ञया किञ्चन
संक्षेपेण विबुद्धिनापि सुहृदा तत्शोध्यमेतद् ध्रुवम् ॥९६॥

अशोलाभाभिमानार्थे न ग्रन्थोऽय कृतो मया ।
स्वश्रेयसे तथान्येषामुपकाराय केवलम् ॥६७॥
एतद्ग्रन्थकृते वाछे फल कर्मक्षयं ध्रुव ।
ततः ससारवाराब्धिः सुतरो मे भविष्यति ॥६८॥
हीनाधिकमभूत्किंचिद्यदिह विदुषावरै-
स्तच्छोध्य कृपया तत्र हास्यः कर्यो न मे मनाक् ॥६६॥
को हेयो विदुषामनादृतिरथ कः पोषणीयोऽपि कः ।
को मासो गदितश्च का वरनदी किं पाठनीय पुरा ॥
निंद्या का महता तथा जिनपतेः का पूजनीया मुदा ।
ज्ञातव्यस्त्रिकवर्णनामसुगतैर्मध्याक्षरैर्ग्रंथकृत् ॥१००॥

अधमः । कार्मण । स्वकीयः । कार्तिक । यमुना । गणित । विकृतिः । प्रतिमा । धर्मकीर्तिमुनिकृति ।

वर्षे द्व्यष्टशते चैकाग्रसप्तत्यधिके(१६७१) रवौ ।
आश्विने कृष्णपचम्या ग्रन्थोऽय रचितो मया ॥१०१॥

## ३०. हरिवंसपुराण (प० रामचन्द्र)

**आदिभाग :—**

श्रीमते नेमिनाथाय केवलज्ञानमूर्तये ।
स्याद्वादवादिने नित्य नमोस्तु भवहारिणे ॥१॥
यल्लोकेन्द्रानल नेमिं प्रह्वीकृत्य गुणार्णवम् ।
हरिवंशपुराणस्य समासो वर्ण्यते मया ॥२॥
जिनसेन-समुद्रस्य पार गन्तु न पार्यते ।
भव्यैः कालप्रभावेन तदर्थ-श्रुति-सुन्दरः ॥३॥
लम्बकचुकवशेऽसौ जातो जन-मनोहरः ।
शोभनाङ्गी सुभगाख्यो देवकी यस्य वल्लभा ॥४॥

तदात्मजः कलावेदी विश्वगुणविभूषितः ।
रामचन्द्राभिधः श्रेष्ठी मल्हणा वनिता प्रियो ॥
तत्सूनुर्जनविख्यातः शीलपूजाद्यलङ्कृतः ।
अभिमन्युर्महादानी तत्प्रार्थनवशादसौ ॥६॥
शृण्वन्ति य इदं भक्त्या भव्याः सुकृतमूर्तयः ।
प्राप्नुवन्ति महाभोगान्तपो(तो)ऽपवर्गमच्युतम् ॥७॥
चारुवाक्यप्रबोधेन कथा सकलनात्मना ।
प्रोच्यते जिनसेनेन शृण्वन्तु भुवि कोविदः ॥८॥

**अन्तभाग :—**

यादवान्वय-विभूषिणी-भुवा दान-पूजन-विनोद-चेतसा ।
कारितेयमभिमन्युना मुदा सान्वयश्रवणहेतुका कथा ॥३॥
यदुक्तं जिनसेनेन सूरिणा भव्यबंधुना ।
तन्मया रामचन्द्रेण संक्षेपेणैव भाषितम् ॥४॥
यावद्रत्नाकरो लोके यावन्मेरुधुरीशिता ।
तावदयं समासो हि तिष्ठता महदाशये ॥५॥

इति श्रीहरिवंशपुराणसमासे अभिमन्युश्रेष्ठिनामांकिते नेमिनाथ-परिनिर्वाणवर्णनं पचमाऽधिकरणं समाप्तं ॥

## ३१. जयपुराण (ब्रह्म कामराज)

**आदिभाग :**

श्रीमन्तं श्री(त्रि)जगन्नाथं वृषभं नृसुरार्चितम् ।
भव-भीति-निहन्तारं वन्दे नित्यं शिवाप्तये ॥१॥

**अन्तभाग :—**

प्रकथ्यतेऽन्वयोऽथात्र ग्रंथकृद्ग्रथभक्तयः ।
मूलसंघे वरे वीरपारपर्याञ्चतुर्गुणे ॥७६॥

अभूद्गणो बलात्कारः पद्मनन्द्यादिपंचसु।
नामास्मिन् च मुनिग्रावशारदोबलवाचकात् ॥८०॥
आचार्यात्कुन्दकुन्दाख्यात्तस्मादनुक्रमादभूत् ।
स सकलकीर्तियोगीशो ज्ञानी भट्टारकेश्वरः ॥८१॥
येनो[द्]धृतो गतो धर्मो गुर्जरे वाग्वरादिके ।
निर्ग्रंथेन कवित्वादिगुणेनेवार्हता पुरा ॥८२॥
तस्माद्भुवनकीर्तिः श्रीज्ञानभूषणयोगिराट् ।
विजयकीर्तयोऽभूवन् भट्टारकपदेशिनः ॥८३॥
तेभ्यः श्रीशुभचन्द्रः श्रीसुमतिकीर्तिसयमी ।
गुणकीर्त्याह्वया आसन् बलात्कारगणेश्वराः ॥८४॥
ततः श्रीगुणकीर्तेर्यः पट्ट-व्योमदिवाकरः ।
वादिना भूषणो भट्टारकोऽभूद्वादिभूषणः ॥८५॥
तत्पट्टाधीश्वरो विश्वव्यापिनिश्वेतकीर्तिधृत् ।
रामकीर्तिरभूदन्य[द्]रामो वा सुखदैर्गुणैः ॥८६॥

तस्मात्स्वगच्छपतिरस्ति स पद्मनन्दी निष्णातकोकसुखकारकपद्मनदी ।
भट्टारको जिनमताम्बर-पद्मनदी श्रीरामकीर्तिपदभूधर-पद्मनदी ॥८७॥
यः शब्दतर्कपरमागमविद्विरागी रागी शिवे विहित-सर्वतपःसमूहः ।
भात्यत्र वस्त्रपरिवर्जन-जातरूपः काले कलौ परिहृताखिलवस्तुलोभः ॥८८॥

वस्त्राणा त्यजनक्षणेऽस्य यतिनो वशादिवालस्यविद्-
धृत्वाग्रे समरादिसिंहनृपतिः खड्गं पुरस्येति सः ।
प्राहाऽसिं प्रवितीर्य मा मुनिवर त्व चाम्बराणि प्रभो
राजन्य कुरु सप्रगृह्य स तदा स्वाङ्गीकृतान्नाचलत् ॥८९॥

गिरिपुराधिपतिर्नृपपुंगवस्तमभिवीक्ष्यमुदोल्लसते प्रभुः ।
गिरिधरादिमदाससमाह्वयः जलधिरम्बुचयेन विधु यथा ॥९०॥
तदुपदेशवशेन तदीयसत्प्रवरपुण्यमराक्रतसाहस ।
जयपुराणमिद तनुबुद्धिना रचितमंगजनाथसुवर्णिना ॥९१॥

मांग्धवंशेभव-पडितजीवराज-मेधाबलात्सकलसौख्यकरकृतोय ।
जैनालयः स्थपतिश्चुद्धिभरादपूर्वो ग्रथानु वा जयभृतो जिनदर्शनोव्य(?)॥६२
भट्टारकस्य गुरुबन्धुरभूत्प्रसिद्धो मेधावतः सुमतिकीर्तिमुनेर्गुणाच्यः ।
आचार्यमुख्यसकलादिमभूषणाख्यस्तच्छिष्यसूरिरभवत्सनरेन्द्रकीर्ति ॥६३
पूर्णस्य वक्तृकवितादिगुणैरदभ्रैः शिष्यो बभूव नृपमान्यनरेन्द्रकीर्तेः ।
वर्णास्मराभवपुत्रः सहिलाद्रकाख्यः शिष्योस्ति तस्य जयसेवककामराजः॥६४

मात्रा-संधि-विभक्ति-लिङ्ग-वचनालंकार-रीत्यादिभिः
प्रोक्तं यद्रहितं सरस्वति मया ग्रथेत्र सूरीश्वरैः ।
निर्वाह्यो चिदभावतः क्षम मयि त्व तद्धिते बालके
मातेवास्फुटवाग्रते शिवकरा तारुण्यकालाद्रुते(?)॥६५॥

दुःसध्यादिमल विनाश्य गुणिनः सवीक्ष्य यूयं बुधा
हेमंतः कविचिल्लवं कुरुत भो ग्रथद्रुह स्वात्मनि ।
शुद्ध सज्जनतागुणाद्दुंदमिवाकूतादिनैर्मल्यद
गभीरं पृथुल त्रिवर्गसलिल पक शरद्वाशराः(?)॥६६॥

भूयात्पुराणरचनाभवपुण्यतो मे सम्यक्पदेन सहितो भवसौख्यवर्गात् ।
अन्योरथकर्मजनकाद्विमुखस्य दृकूचिच्चारित्ररत्ननिचयो न हितस्वतोन्यः॥६७॥

अमृतवार्द्धिखभूमिसुदर्शना विजयनामनगाचलमदिर(?) ।
चपलरूकसमूहैः सहिता द्रुमे(?) जयतु यावदिद भुवनत्रये ॥६८॥

शिल्पिरुत्पादयत्येव जिनबिम्बं तथा कविः ।
शास्त्रं तन्मान्यतामेति मान्यं तन्मानित जनैः ॥६९॥

राष्ट्रस्यैतत्पुराण शकमनुजपतेर्मेदपाटस्य पुर्या
पश्चात्सवत्सरस्य प्रचलमटतः पंचपचाशतो हि ।
अभ्राभ्रादैकसवच्छरमिकरयुजः(१५५५) फाल्गुणे मासि पूर्णे
मुख्यायामौदयाया सुकविविनयिनो लालजिष्णोश्च वाक्यात्॥१००॥

सकलकीर्तिकृतं पुरुदेवजं समवलोक्य पुराणमिय कृतिः ।
जयमुनेर्गुणपालसुतस्य च बृहदलं जिनसेनकृतं कृता ॥१०१॥

इति श्रीजयाङ्के जयनाम्नि पुराणे भट्टारक-श्रीपद्मनन्दि-गुरूपदेशाद्ब्रह्म-कामराजविरचिते पंडितजीवराजसाहाय्यात् त्रयोदशमः सर्गः ।

## ३२. कार्तिकेयानुप्रेक्षा-टीका ( भ० शुभचन्द्र )

आदिभाग :—

शुभचंद्र जिनं नत्वाऽनंतानंतगुणार्णवम् ।
कार्तिकेयानुप्रेक्षाष्टीकां वक्ष्ये शुभश्रिये ॥१॥

अन्तभाग :—

श्रीमूलसंघेऽजनि नन्दिसंघो वरो बलात्कारगणः प्रसिद्धः ।
श्रीकुंदकुंदो वरसूरिवर्यो विभाति भाभूषणभूषितांगः ॥२॥
तदन्वये श्रीमुनिपद्मनन्दी ततोऽभवच्छ्रीसकलादिकीर्तिः ।
तत्पट्टधारी भुवनादिकीर्तिः श्रीज्ञानभूषो वरचित्तभूषः ॥३॥
तदन्वये श्रीविजयादिकीर्तिस्तत्पट्टधारी शुभचंद्रदेव ।
तेनेयमाकारि विशुद्धटीका श्रीमत्सुमत्यादि सुकीर्तिकीर्तिः ॥४॥
सूरिश्रीशुभचंद्रेण वादि-पर्वत-वज्रिणा ।
त्रिविद्येनानुप्रेक्षाया वृत्तिर्विरचिता वरा ॥५॥
श्रीमद्विक्रमभूपतेः परिमिते वर्षे शते षोडशे
माघे मासि दशाग्रवन्हिसहिते(१६१३) ख्याते दशम्यां तिथौ ।
श्रीमच्छ्रीमहिसार-सारनगरे चैत्यालये श्रीगुरो
श्रीमच्छ्रीशुभचंद्रदेव-विहिता टीका सदा नन्दतु ॥६॥
वर्णिश्रीक्षेमचंद्रेण विनयेन कृतप्रार्थना ।
शुभचंद्रगुरो स्वामिन् कुरु टीकां मनोहरां ॥७॥
तेन श्री शुभचन्द्रेण त्रैविद्येन गणेशिना ।
कार्तिकेयानुप्रेक्षाया वृत्तिर्विरचिता वरा ॥८॥
तथा साधुसुमत्यादिकीर्तिना कृतप्रार्थना ।
सार्थीकृता समर्थेन शुभचन्द्रेण सूरिणा ॥९॥

तत्पट्टेऽजनि बोधबुद्धिर्निखिलन्यायादिशास्त्रार्थक -
श्चिद्रूपामृतपानलालसमतिः श्रीज्ञानभूपो जयी ।
जीयात् पंचमकालकल्पशिखरी तत्पट्टधारी चिरं
श्रीमच्छ्रीविजयादिकीर्तिमुनिपो जीयाच्च शास्त्रार्थवित् ॥५७॥

सोमप्रभ सोमसमानतेजाः श्रीसोमसल्लाञ्छन इद्धकांतिः ।
सोमः सुमूर्तिश्च करोतु साम्यं श्रीशोभचंद्रस्य सुयोगिनः सः ॥५८॥

यः सशृणोति भजते निखिल चरित्र
यः कामयति प्रथयतीन्दुनिभस्य भावात् ।
यः पाठयन् पठयति जिनभक्तिरागात्
स सिद्धिभीरुमुखपंकजमश्नुते हि ॥५९॥

श्लोकाः पष्ठ्यधिकाः सर्वे शतपंचदशामलाः ।
प्रमाणमस्य विज्ञेय लेखकैः पाठकैः सदा ॥६०॥

इति श्रीचन्द्रप्रभचरित्रे भट्टारकश्रीशुभचन्द्रविरचिते भगवतो निर्वाण-गमनो नाम दशमो सर्गः ॥

## ३४. पार्श्वकाव्य-पंजिका ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीपार्श्वं पार्श्वमानम्य सुपार्श्व-निहितोत्तमम् ।
पद-वैषम्य-समेत्रीं वक्ष्ये तत्काव्यपंजिकाम् ॥१॥

**अन्तभाग :—**

श्रीमूलसंघेऽजनि नन्दिसंघस्तत्राभवच्छ्रीसकलादिकीर्तिः ।
शास्त्रार्थकारी खलु तस्य पट्टे भट्टारकः श्रीभुवनादिकीर्तिः ॥१॥

तत्पट्टोदयपर्वते रविरभूत् श्रीज्ञानभूषो यतिः
मिथ्यामार्ग[महा]न्धकारतरणिश्चारित्रचूडामणिः ।
सम्यक्त्वीकृतशास्त्रसद्व्रतभरः सच्छामलीलायुतः
पायाद्वो भवदुःखतस्त्रिजगति प्रख्यातनामा मुनिः ॥२॥

प्रकटतत्पदपंकजभानुमान् सकलतार्किकवंदितपद्युगः ।
विजयकीर्ति[गुणी] गुणसागरः स भवताम[व]ताद्यतिनायकः ॥३॥

तदीय-पट्ट-पर्वत-प्रचण्ड-चण्डदीधितिः
स्फुरद्यशाः सुधीधनः कृपापरः परोदयः ।
सुनव्य-भव्य-गद्य-पद्य-गीति-रीति-वेदकः
सुशोभचन्द्रसन्मुनिर्गणाधिपः पुनातु नः ॥४॥

वादविद्याविनोदेन रञ्जितानेकभूपतिः ।
सौभद्रः(शौभेन्दुः) मे श्रियं देयाद्वाचा तर्पित-सज्जनः ॥५॥

विजित-वादिगणो गतमत्सरः सकलसूरिगुणोदयसुन्दरः ।
शममयः सुकजः सुविदांवरः सुशुभचन्द्र गुरुर्गुणवंधुरः ॥६॥

दुर्व्याख्येदं मंदधीभिः पार्श्वकाव्य सुभाकरम् ।
मत्वेति मतिमास्तस्य पंजिकामकरोद्गणी ॥७॥

श्रीभूषण स्वस्य गुरोः सुशिष्यः सूरिः स्वयं शास्त्रविदां मतश्च ।
तदा ···· च्छ्रीशुभचन्द्रदेवः चक्रे सुपंजी जिनकाव्यवाण्याः ॥८॥

वर्णिश्रीपालनामा मतिमतमहितो मार्गसर्गो निसर्ग-
द्ग्रस्तैविद्यविद्यान्निधिविकचसरो जातभास्वद्विवस्वान ।
सार्थे ग्रंथार्थवेत्ता विशदमिदमरं पुस्तकं प्राक् सुपार्श्व-
काव्यस्य वै सुपज्याः लिखितललितवाक् वाग्मिना चोपजीव्यः॥९॥

पंजिकेयं चिरं चित्ते स्थेयात्सद्विदुषां स्थिरम् ।
कृता श्रीशुभचन्द्रेण श्रीभूषणसमाग्रहात् ॥१०॥

श्रीपार्श्वपूज्यपादो गणिगणविनुतः श्रीप्रभाचन्द्रदेवः
सिद्धः श्रीवर्धमानो वरविजययशाः ज्ञानभूषोऽकलंकः ।
दिव्यश्रीभूषणोग्रवरविधिविदुषा शाश्वतश्रीशुभेन्दुः
श्रीपालः पातु पापात्प्रमतिपरिणतिर्वादिराजश्च युष्मान् ॥११॥

इति श्रीपार्श्वनाथ-काव्य- जिका समाप्ता ।

## ३५. श्रेणिकचरित्र ( भ० शुभचन्द्र )

आदिभाग:—

श्रीवर्द्धमानमानंद नौमि नानागुणाकर ।
विशुद्धध्यानदीप्तार्चिहु तकर्म्मसमुच्चय ॥१॥
बाल्येपि मुनि-संदेह-निर्नाशाद्यो जिनेश्वरः ।
सन्मतित्व समापन्नः सन्मत्याख्या समाश्रितः ॥२॥
अमराहिफणामर्द्दान्महावीरसुनामभाक् ।
बाल्ये यो बलता प्राप्तो वीराणा वीरता गतः ॥३॥
जरत्तृणमिवात्यत राज्य प्राज्य नरेश्वर( च नश्वर ) ।
मत्वा त्यक्त्वाश्रितो दीक्षा यो वीरो विश्ववदितः ॥४॥

अन्तभाग:—

जयतु जितविपक्षो मूलसंघः सुपक्षो
हरतु तिमिरभार भारती-गच्छसारः (त्राण:=प्रकाशः?) ।
नयतु सुगतमार्गं शासन शुद्धवर्गं
जयतु च शुभचद्र कुंदकुदो मुनीन्द्र' ॥१७॥
तदन्वये श्रीमुनिपद्मनंदी विभाति भव्याकर पद्मनन्दी ।
शोभाधिशाली वरपुष्पदत सुकान्ति-सभिन्न-सुपुष्पदन्तः ॥१८॥
पुराण-काव्यार्थ विदावरत्व विकाशयन्मुक्तिविदावरत्वं ।
विभातु वीर• सकलाद्यकीर्ति कृतापकेनौ(?) सकलाद्यकीर्तिः ॥१९॥
भुवनकीर्निर्यतिर्जयताद्यमी भुवनपूरितकीर्तिचय' सदा ।
भुवनविश्वजिनागमकारणो भव-नवाम्बुद वातभरः परः ॥२०॥
तत्पट्टोदयपर्वते रविरभूद्भव्याम्बुज भासयन्
सन्नेत्रास्त्रहर तमो विघटयन्नानाकरैर्भासुरः ।
भव्याना सुगतश्च विग्रहमत' श्रीज्ञानभूषः सदा
चित्ते चद्रकसंगतः शुभकर' श्रीवर्द्धमानोदयः ॥२१॥

जगति विजयकीर्तिः पुण्यमूर्तिः सुकीर्तिः
जयतु च यतिराजो भूमिपैः स्पृष्टपादः ।
नय-नलिन-हिमांशुर्ज्ञानभूषस्य पट्टे
विविध-परविवादि-क्ष्माधरे वज्रपातः ॥२२॥
तच्छिष्येण शुभेन्दुना शुभमनः श्रीज्ञानभावेन वै
पूत पुण्यपुराणमानुषभवं संसारविध्वंसकः ।
नो कीर्त्या व्यरचि प्रमोहवशतो जैने मते केवलं
नाहंकारवशात्कवित्तमदतः श्रीपद्मनामेहितं ॥२३॥
इदं चरित्रं पठतः शिवं वै श्रोतुश्च पद्मेश्वरवत्पवित्र ।
भविष्णु संसारसुखं नृदेवं संभुज्य सम्यक्त्वफलप्रदीपं ॥२४॥
चंद्राऽर्क-हेमगिरि-सागर-भू-विमानं
गगानदीगमन सिद्धशिलाश्च लोके ।
तिष्ठति यावदभितो वरमर्त्यशेवा( देवा ? )
स्तिष्ठतु कोविदमनोम्बुजमध्यभूताः ॥२५॥

इति श्रीश्रेणिकभवानुबद्ध-भविष्यत्पद्मनाभपुराणे पंचकल्याणवर्णनं नाम पचदशः पर्वः ॥१५॥

## ३६. पाण्डवपुराण ( भ० शुभचन्द्र )

आदिभाग :—

सिद्धं सिद्धार्थसर्वस्वं सिद्धिदं सिद्धिसत्पद ।
प्रमाण-नय-संसिद्ध सर्वज्ञ नौमि सिद्धये ॥१॥
वृषभ वृषभं भातं वृषभाक वृषोन्नतं ।
जगत्सृष्टि-विधातार वन्दे ब्रह्माणमादिमं ॥२॥
चन्द्राभं चन्द्रशोभाढ्यं चन्द्रार्च्यं चन्द्रसंस्तुतं ।
चन्द्रप्रभं सदाचन्द्रमीडे सच्चन्द्रलाञ्छन ॥३॥

शान्ति शान्तेर्विधातारं सुशातं शातकिल्विषम् ।
तन्नमामि निरस्ताऽघ मृगाकं षोडशं जिनम् ॥४॥
नेमिर्धर्मरथेनेमिः शास्तु सशिंतशासनः ।
जग(जीया)ज्जगत्त्रयीनाथो निर्जितानंगसम्मदः ॥५॥
वर्धमानो महावीरो वीरः सन्मतिनामभाक् ।
स पातु भगवान् विश्वं येन बाल्ये जितः स्मरः ॥६॥
गौतमो गौतमो गीष्पो गणेशो गणनायकः ।
गिरः गणनतो नित्यं भातु भा-भारभूषितः ॥७॥
युधिष्ठिर कर्मशत्रु युधिस्थिरः स्थिरात्मक ।
दधे धर्मार्थसंसिद्ध मानसे महित मुदा ॥८॥
भीम महामुनि भीम पापारित्रयकारणे ।
संसारासातशान्त्यर्थं दधे हृदि धृतोन्नति ॥९॥
अर्जुनस्य प्रसिद्धस्य विशुद्धस्य जितात्मनः ।
स्मरामि स्मरमुक्तस्य स्मररूपस्य सुस्मृतेः ॥१०॥
नकुलो वै सदा देवैः सेवितः शुद्धशासनः ।
सहदेवो बली कौल्यमलनाशी विभाति च ॥११॥
भद्रबाहुर्महाभद्रो महाबाहुर्महातपाः ।
स जीयात् सकलं येन श्रुतं ज्ञानं कलौ विदा ॥१२॥
विशाखो विश्रुता शाखा सुशाखो यस्य पातु मा ।
स भूतले मिलन्मौलिहस्तभूलोक-संस्तुतः ॥१३॥
कुन्दकुन्दो गणी येनोर्जयंतगिरिमस्तके ।
सोऽवताद्वादिता ब्राह्मी पाषाणघटिता कलौ ॥१४॥
समन्तभद्रो भद्रार्थो भातु भारतभूषणः ।
देवागमेन येनाऽत्र व्यक्तो देवागमः कृतः ॥१५॥
पूज्यपाद सदा पूज्य-पादः पूज्यैः पुनातु मां ।
व्याकरणार्णवो येन तीर्णो विस्तीर्णसद्गुणः ॥१६॥

अकलंकोऽकलंकः स कलौ कलयतु श्रुतं ।
पादेन ताडिता येन मायादेवी घटस्थिता ॥१७॥
जिनसेनो यतिर्जीयाज्जिनसेन कृतं वर ।
पुराणपुरुषाख्यार्थं पुराणं येन धीमता ॥१८॥
गुणभद्रभदन्तोऽत्र भगवान् भातु भूतले ।
पुराणादौ प्रकाशार्थं येन सूर्यायितं लघु ॥१९॥
तत्पुराणार्थमालोक्य धृत्वा सारस्वतं श्रुतम् ।
मानसे पाण्डवाना हि पुराणं भारतं ब्रुवे ॥२०॥
× × × ×

वीरो विश्वगुणाश्रितो गुणगणा वीरं श्रिता सिद्धये ।
वीरेणैव विधीयते व्रतचयो वीराय स्वस्त्यस्तु च ॥
वीराद्वर्तत एव धर्मनिचयो वीरस्य सिद्धिर्वरा ।
वीरे याति जगत्त्रयं जितमदं संजायते निश्चितं ॥१५४॥

इति श्रीपाण्डवपुराणे महाभारतनाम्नि भट्टारकश्रीशुभचन्द्रप्रणीते ब्रह्मश्रीपाल-साहाय्यसापेक्षे श्रेणिकस्य जिनवन्दनोत्साहवर्णनं नाम प्रथमं पर्व ॥१॥

अन्तभाग :—

श्रीमूलसंघेऽजनि पद्मनन्दी तत्पट्टधारी सकलादिकीर्तिः ।
कीर्तिः कृता येन च मर्त्यलोके शास्त्रार्थकर्त्री सकला पवित्रा ॥१६७॥
भुवनकीर्तिरभूद्भुवनाधिपैर्भुवनभासनचारुमतिः स्तुतः ।
वरतपश्चरणोद्यतमानसो भवभयाहिखगेट् क्षितिवत् क्षमी ॥१६८॥
चिद्रूपवेत्ता चतुरश्चिरन्तनश्चिद्भूषणश्चर्चितपादपद्मकः ।
सूरिश्च ··न्द्रादिचयैश्चिनोतु वै चारित्रशुद्धिं खलु न प्रसिद्धिदो ॥१६९॥
विजयकीर्तियतिर्मुदितात्मको जितता(?)ऽन्यमतः सुगतैः स्तुतः ।
अवतु जैनमतः सुमतो मतो नृपतिभिर्भवतो भवतो विभुः ॥१७०॥
पट्टे तस्य गुणाम्बुधिव्रतधरो धीमान् गरीयान् वर

श्रीमच्छ्रीशुभचन्द्र एष विदितो वादीभसिंहो महान् ॥१७१॥
तेनेदं चरितं विचारसुकरं चाकारि चञ्चद्रुचा ।
पाडो श्रीशुभसिद्धिमातजनक सिद्ध्यै सुनाना सदा ॥१७२॥
चन्द्रनाथचरितं चरितार्थं पद्मनाभचरितं शुभचन्द्रं ।
मन्मथस्य महिमानमतद्रो जीवकस्य चरितं च चकार ॥१७३॥
चन्दनायाः कथा येन दृब्धा नान्दीश्वरी तथा ।
आशाधरकृतार्चाया वृत्तिः सद्वृत्तशालिनी ॥१७४॥
त्रिंशच्चतुर्विंशतिपूजनं यः सद्वृद्धसिद्धार्चनमाव्यधत्त ।
सारस्वतीयार्चनमत्र शुद्धं चिंतामणीयार्चनमुच्चरिष्णुः ॥१७५॥
श्रीकर्मदाहविधिबंधुरसिद्धसेवां नानागुणौघ गणनाथसमर्चनं च ।
श्रीपार्श्वनाथवरकाव्यसुपंजिका च यः सच्चकार शुभचन्द्रयतीन्द्रचन्द्रः१७६

उद्यापनमदीपिष्ट पल्योपमविधेश्च यः ।
चारित्रशुद्धितपसश्च चतुस्त्रिद्विदशात्मनः ॥१७७॥

संशयवदनविदारणमपशब्दसुखंडनं परं तर्के ।
सतत्त्वनिर्णयं च वरस्वरूपसंबोधनीं वृत्ति ॥१७८॥
अध्यात्मपद्मवृत्तिं सर्वार्थापूर्वसर्वतोभद्रम् ।
योऽकृत सद्व्याकरणं चिन्तामणिनामधेयं च ॥१७९॥
कृता येनाऽङ्गप्रज्ञप्तिं सर्वाङ्गार्थ-प्ररूपिका ।
स्तोत्राणि च पवित्राणि षड्वादाः श्रीजिनेशिना ॥१८०॥

तेन श्रीशुभचन्द्रदेवविदुषा सत्पाण्डवानां परं
दीप्यद्दशविभूषणं शुभमरभ्राजिष्णुशोभाकरं ।
शुभद्धारतनाम निर्मलगुणं सच्छुब्दचिन्तामणि
पुर्ण्यं पुण्यपुराणमत्र सुकरं चाकारि प्रीत्या महत् ॥१८१॥

श्रीपालवर्णिना येनाकारि शास्त्रार्थसंग्रहे ।
साहाय्यं स चिरं जीयाद्वरविद्या-विभूषणः ॥१८२॥

× × × ×

श्रीमद्विक्रमभूपतेर्द्विकहते स्पष्टाष्टसख्ये शते
रम्येऽष्टाधिकवत्सरे(१६०८) सुखकरे भाद्रे द्वितीया-तिथौ ।
श्रीमद्वाग्वरनीवृतीदमतुले श्रीशाकवाटे पुरे
श्रीमच्छ्रीपुरुधाम्नि च विरचित स्थेयात्पुराण चिरं ॥१८६॥

इति श्रीपांडवपुराणे भारतनाम्नि भट्टारक-श्रीशुभचन्द्र-प्रणीते ब्रह्म-श्रीपालसाहाय्यसापेक्षे पाडवोपसर्गसहन-केवलोत्पत्ति मुक्ति-सर्वार्थसिद्धिगमन-श्रीनेमिनिर्वाणगमन-वर्णनं नाम पंचविंशतितमं पर्व ॥२५॥

## ३७. जीवंधरचरित्र ( भ० शुभचन्द्र )

आदिभाग :—

श्रीसन्मतिः सता कुर्यात्समीहितफलं परं ।
येनाप्येत महामुक्तराजस्य वरवैभवः ॥१॥

( इसके बाद सिद्धादि परमेष्ठि-स्मरणके ४ पद्य हैं । )

गौतमं धर्मपारीण पूज्यपादं प्रवोधकं ।
समंतभद्रमानंदमकलंकं गुणाकरं ॥६॥
जिनसेनं शुभासीन ज्ञानभूष परं गुरु ।
शुभचंद्रं प्रणम्योच्चैर्वक्ष्ये श्रीजीवकोद्भवं ॥७॥

इति श्रीजीवधरस्वामिचरिते काष्ठांगार-वर्णनो नाम प्रथमोल्लासः ।

अन्तभाग :—

ये(ते)षा धर्मकथानुयोगसुविधिज्ञानप्रमोदागमा-
चार-श्रीशुभचन्द्र एप भविना ममागतः संभवं ।
मार्गोदर्शनकोविदं हृतहितं तामस्यभारं मदा
छिंद्याद्वाक्किरणैः कथञ्चिदतुलैः सर्वत्र सुव्यापिभिः ॥८५॥

श्रीमूलसघो यतिमुख्यसेव्यः श्रीभारतीगच्छविशेपशोभः ।
मिथ्यामतध्वान्त-विनाशदक्षो जीयाच्चिरं श्रीशुभचन्द्रभासी ॥८६॥

श्रीमद्विक्रमभूपतेर्वसुहतद्वैतेशते१६०० सप्तह७(के?)
वेदै४र्न्यूनतरे समे (१६०३ ?)शुभतरे मासे वरेण्ये शुचौ ।
वारे गीष्पतिके त्रयोदशतिथौ सन्नूतने पत्तने
श्रीचन्द्रप्रभधाम्नि वै विरचितं चेदं मया तोषतः ॥८७॥
आचन्द्रार्कं चिरं जीयाच्छुभचन्द्रेण भाषितं ।
चरितं जीवकस्याऽत्र स्वामिनः शुभकारणं ॥८८॥

इति श्रीमुमुक्षु-शुभचन्द्रविरचिते श्रीमज्जीवंधरस्वामिचरिते जीवंधरस्वामिमोक्ष-गमनवर्णनं नाम त्रयोदशो लंभः ॥१३॥

## ३८. चंदनाचरित ( भ० शुभचन्द्र )

**आदिभाग :—**

चकार करुणाक्रांतं कृतिं कर्मठकर्मणं ।
यस्तं केवलिनं कामं चेक्रियेहं कृतार्थकं ॥१॥
सिद्धध्याना सदासिद्धाः सिद्धिवृद्धिसमृद्धयः ।
एधते स्म विशुद्धा नः शुद्धिं ददतु धर्मिणा ॥२॥

**अन्तभाग :—**

जयति जितविपक्षं पालितानेकपक्षः कृतसकलसुशिक्षः प्राप्तदीप्यत्सुदक्षः ।
विहितशमितिरक्षो मूलसंघाभ्यलक्षं जिनपदकरपक्षो ध्वस्तपापाकरेक्षः ॥६३॥
स्वगुरुविजयकीर्तिः प्रस्फुरत्सोमकीर्ति-
र्भवजलधिसुतूर्तिः शास्त्रा(स्त्रवार)ब्धिपूर्तिः ।
जिनपतिमतवर्तिर्विश्वदुःखारिहूर्ति-
र्जयतु जनसुभूतिर्नष्टकष्टोत्तरार्तिः ॥६४॥
शास्त्राण्यनेकान्यवगाहय कृत्वा पुराणसल्लक्षणकानि भूरि ।
सच्चंदनाचारुचरित्रमेतच्चकार च श्रीशुभचन्द्रदेवं ॥६५॥
श्रीज्ञानभूषणपदे विजयादिकीर्तिस्तत्पादपंकजमधुव्रत एव सेव्यः ।
श्रीमूलसंघपदभृत् शुभचन्द्रदेवः शीलेशशीलमहिमानमिमं चकार ॥६६॥

अकृत-सुकृत-कर्ता सर्व्व-सावद्य-हर्ता
शम-दम-यम-हर्ता(भर्त्ता) शौभचन्द्रः सुभर्ता।
चरितममलवर्ता चंदनायाश्च पर्ता
जनन-जलधिभर्ता कर्मकामारिशर्ता ॥१९७॥
शीलं सर्वगुणान्वितं वरगुणाः शीलं बुधाः कुर्व्वते
शीलेनैव समाप्यते परगुणः स्वस्त्यस्तुशीलाय वै।
शीलात्सद्व्रतसचयः सममयाच्छीलस्य सर्वे गुणाः
शीले चित्तमहं दधे वृतिवरे हे शील मा पाहि वै ॥१९८॥
श्रीचदनायाश्चरितं पवित्रं ये चिन्वते चेतसि चित्स्यभावाः।
ईक्षंत एवं क्षणतः समक्ष मोक्ष तके क्षीणविपक्षपक्षाः ॥१९९॥
वाग्वरे वागवरे देशे वाग्वरैर्विदिते क्षितौ।
**चंदनाचरितं चक्रे शुभचंद्रो गिरौपुरे ॥२००॥**
ा शीलतो जयति चंदनबालिकेयं वीरस्य ससदि समाप जयं जयती।
. र्म्मारिपक्षमखिलं च समेष्यतीद्धं मोक्षं पर परमका दशकागवेत्री ॥२०१॥

इति श्रीशीलविलासे चंदनाचरिते भट्टारक-श्रीशुभचंद्र-विरचिते
..दनार्यकादिभवान्तरवर्णन नाम पंचमपर्व ॥ इति चंदनाचरित्रं संपूर्णम्

## ३९. प्राकृतलक्षण-सटीक ( भ० शुभचन्द्र )

आदिभागः—

श्रीज्ञानभूषणं देवं परमात्मानमव्ययं।
प्रणम्य बालसवुद्ध्यै वक्ष्ये प्राकृतलक्षणं ॥१॥

अन्तभाग :—

यदुक्तं सूत्रतन्त्रेऽस्मिन् शब्दचिन्तामणौ स्फुटं।
विचार्य बुद्धिसंसिद्ध्यै शुभचन्द्रेण सूरिणा ॥१॥
श्रीमूलसंघे शिवसाधुसंघे श्रीकुन्दकुन्दान्वयपद्मसूर्य्यः।
निरस्तमोहः सकलादिकीर्तिर्जीयात्सदा श्रीभुवनादिकीर्त्तिः॥२॥

तत्पट्टपद्मे रविवद्विभाति विभासुरो भोगभवारिभेदी ।
श्रीज्ञानभूषो नरलोकलोक्यो लोकाग्रलोकोत्तमलोकनेच्छः ॥३॥
विजयकीर्तियतिर्जगता गुरुर्गरिमगीर्मदितागिगणो गणी ।
गिरति गा गुणिनो मतयेऽग्रणीः सुगुरुणां रविगुः समगुः सम ॥४॥
षट्तर्कचचुचरणोद्धतवादिमत्तमातङ्गकुम्भमदभेदनपचतुण्डः ।
श्रीमच्छुभेन्दुगणपो गुणगेय(?)कीर्तिश्चिन्तामणिं विशदशब्दमय चकार॥५॥
शुभचन्द्रमुनीन्द्रेण लक्षणाब्धि विगाह्य वै ।
प्राकृत लक्षणं चक्रे शब्दचिन्तामणौ स्फुट ॥६॥
शब्दचिन्तामणिं धीमान् योऽध्येति धृतिसिद्धये ।
प्राकृताना सुशब्दाना पार याति सुनिश्चितं ॥७॥
प्राकृतं लक्षण रम्य शुभचन्द्रेण भाषित ।
योऽध्येति वै सुशब्दार्थधनराजो भवेन्नर ॥८॥

इति मुमुक्षु-भट्टारक-श्रीज्ञानभूषणपट्टोदयाचलद्युमणि-सकलतार्किकचूडा-मणि-भट्टारकश्रीविजयकीर्त्तिपट्टप्रकटत्रैविद्यविद्याविशदभट्टारकश्रीशुभचंद्रविर-चिताया स्वोपज्ञशब्दचिन्तामणिवृत्तौ तृतीयस्याऽध्यायस्य चतुर्थपादः समाप्तः॥

समाप्तेदं प्राकृतव्याकरणम् ॥

## ४०. अध्यात्मतरङ्गिणी ( भ० शुभचन्द्र )

**आदिभाग :—**

जयतु जितविपक्षः पालिताशेषशिष्यो विदितनिजस्वतत्त्वश्चोदितानेकसत्त्वः ।
अमृतविधुयतीशः कुन्दकुन्दो गणेशः श्रुतसुजिनविवादःस्याद्विवादाधिवादः ॥१॥

**अन्तभाग —**

सम्यक्ससारवल्लीवलय-विदलने मत्तमातङ्गमानी
पापातापेभकुम्भोद्गमनकराकुण्ठकण्ठीरवारिः ।
विद्वद्विद्याविनोदाकलितमतिरहो मोहतामस्य सार्थो(?)
चिद्रूपोद्भासिचेता विदितशुभयतिर्ज्ञानभूषस्तु भूयात् ॥२॥

विजयकीर्तियतिर्जगता गुरुर्विधृतधर्मधुरोद्धृतिधारकः ।
जयतु शासन-भासन-भारतीमयमतिर्दलितापरवादिकः ॥३॥
शिष्यस्तस्य विशिष्टशास्त्रविशदः संसारभीताशयो
भावाभावविवेकवारिधितरस्याद्वादविद्यानिधिः ।
टीका नाटकपद्यजा वरगुणाध्यात्मादिस्रोतस्विनीं
श्रीमच्छ्रीशुभचन्द्र एष विधिवत्संचर्करीति स्म यै ॥४॥
त्रिभुवनवरकीर्तेर्जातरूपात्तमूर्तेः शमदममयपूर्तेराग्रहान्नाटकस्य ।
विशदविभववृत्तो वृत्तिमाविश्चकार गतनयशुभचन्द्रो ध्यानसिद्ध्यर्थमेव ॥५॥
विक्रमवरभूपालात्पंचत्रिशते त्रिसप्ततिर्व्यधिके(१५७३) ।
वर्षेऽप्याश्विनमासे शुक्ले पक्षेऽथ पंचमी-दिवसे ॥६॥
रचितेयं वरटीका नाटक-पद्यस्य पद्ययुक्तस्य ।
शुभचन्द्रेण सुजयताद्विद्यासवल(?) न पद्माकात् ॥७॥
.........पातनिकाभिश्च भिन्नभिन्नाभिः ।
जीयादाचन्द्रार्कं स्वाऽध्यात्मतरङ्गिणी टीका ॥८॥

इति कुमतद्रुममूलोन्मूलन-महानिर्झरणीश्रीमदध्यात्मतरंगिणी टीका समाप्ता । समाप्तश्चायं ग्रन्थः ।

## ४१. कर्णामृतपुराण ( केशवसेन सूरि )

आदिभाग :—

लीलावासमलक्ष्म च श्रीपतिं परमेश्वरं ।
सुलक्ष्मं ज्ञानिना वंदे पुरुं पावन-शासनं ॥१॥
मातरं जगतां ज्ञान-विधान-परमोदया ।
ध्यायामि मनसि प्रायो गिरं श्रीशर्महेतवे ॥२॥
अज्ञानतिमिरं येन दारितं ज्ञान-दीप्तिभिः ।
मित्रेणेव सदा तस्मै गुरुवे स्यान्नमस्कृतिः ॥३॥

( आगे सज्जन, खल, वक्ता, श्रोताके लक्षण १० पद्योंमें है )

दानिना चक्रिणां तीर्थंकृतां शीलवतां सतां ।
राम-कृष्ण-मनोज्ञानां कथा तच्छास्त्रमुच्यते ॥१४॥
अमृताख्यपुराणेऽस्मिन् कर्णसाकल्यमुच्यते ।
मरीचिभवप्राचुर्यांकुरः सम्यक्त्वसत्फलं ॥१५॥
बहूनां प्रेमयुक्तानां दानशीलवतां व्रतं ।
कामदेवचरित्रं श्रीश्रीपालकथानकं ॥१६॥
तपःपूजा-प्रभावानां कुभावानां कथानकं ।
शूराणां विरहाकान्तदेहिनां वृत्तमित्यलं ॥१७॥
[त्रिभिः] कुलकं । इति पुराणद्वारं ।
अगाधोऽयं पुराणब्धिर्मतिर्मेऽल्पा प्रवर्तते ।
तथापि तर्तुमिच्छामि गगनं पक्षिराडिव ॥१८॥
सिद्धोक्त-नीतिसारादि-पुराणोद्भूतसन्मतिं ।
विधास्यामि प्रसन्नार्थं ग्रंथं संदर्भगर्भितं ॥१९॥
खखाग्निरसबाणेन्दुश्लोकसंख्या(१५६३००) प्रसूत्रिता ।
नीतिसारपुराणस्य सिद्धसेनादिसूरिभिः ॥२०॥
पूर्वाचार्योद्धृतं तत्त्वं निरीक्ष्य परमात्मनः ।
प्रसादेन सदानन्दं करिष्यामि मनोज्ञ(ग)तं ॥२१॥

× × × ×

इति श्रीकर्णामृतपुराणे धर्मशास्त्रे तत्त्वोद्धारे भ०श्रीरत्नभूषणाम्नायालंकार-ब्रह्मश्रीमंगलाग्रज-श्रीपूरमल्लापति-स्थविराचार्य-श्रीकेशवसेन-विरचिते ब्रह्मवर्द्धमानसहाय्यसापेक्षे श्रीभगवदागमनं नाम प्रथमः स्कन्धः ॥१॥

**अन्तभाग :—**

काष्ठासंघे गरिष्ठे प्रबलमुनियुते रामसेनो भदन्तः
श्रीमानासीत् क्रमेणेन्दुकविशदयशा रत्नभूषाभिधानः ।
तत्पादाम्भोजभृंगो विमलतरमतिः श्रीजयाद्यन्तकीर्ति-
रास्ते विद्वज्जनानां प्रथम इह जिनाराधनैकस्वभावः ॥८८॥

घाग्वरे जनपदे च वीरिका-कान्त-हर्ष इति नाम तत्सुतः ।
कृष्णदासमुनिपो विराजते प्रेमपूरपरमो दयान्तरः ॥८६॥
नीतिसग्रहपुराणसागरादुद्धृतोऽखिलहिताय मेऽप्ययं(?) ।
धर्मशास्त्रमणिरुत्तमोऽघहाः श्राव्य एव नितरा मनस्विभिः ॥६०॥
केवल सुमनसा मया कृतो ग्रन्थ एष परमार्थबुद्धितः ।
श्रीपुराणपुरुष-प्रसादतः कृष्णदासकविवेधसा शुभः ।६१॥
मालवे जनपदे मनोरमे भाति भूतिलकभागा पुरी ।
स्वर्गपस्य भ्रशपूरिव पावना परमपावनैर्नरः ॥६२॥
तत्र पार्श्वजिनालये शुभे माघमासि उडुनविवसारे(?) ।
सत्तिथौ प्रतिपदि प्रभासिनाऽकार्ययः(?) च कविता यथागमः ॥६३॥
शोधयतु निपुणा इदं सदा कर्णदेवसुपुराणमादरात् ।
ये विरोधरहिता विचारिणः सन्तु तेल(?) हितकारणाम् ॥६४॥
लेलिहान-वसु-षड्-विधुप्रमे(१६८८) वत्सरे विविधभावसंयुतः ।
एष एव रचितो हिताय मे ग्रथ आत्मन इहाखिलागिना ॥६५॥
आकर्णयन्ति खलु ये सुनरा नतागा श्रीकर्णभूपतिपुराणमिदं पवित्रं ।
पुत्र लभंत इह ते परमा रमा च कृष्णेन चन्द्रवदनेन निरूपितार्थे ॥६६॥
श्लोकसंख्या समाख्याता खखाम्बरचतुःप्रमा(४०००) ।
सदोदयैः सता श्रेष्ठैः केशवाद्यन्तसूरिभिः ॥६७॥
आगंगासागरं यस्य दक्षिणे गूर्जरे तथा ।
मालवे मेदपाटे च यशो जयति सत्कवेः॥६८॥
दिशा·······शिबिकाधिरूढो भट्टारकस्थापकसूरिमंत्री ।
भट्टारकाचार्य इहास्ति कृष्णके नः पृथिव्या यत ईशपूज्यः ॥६६॥
नृपैर्भट्टारकाचार्यपदं दत्तं च दक्षिणे ।
यस्य स कृष्णसेनाख्यः कविनाथोजयत्परं ॥१००॥
इति श्रीकर्णामृतपुराणे धर्मशास्त्रे 'भ०श्रीरत्नभूषणाम्नायालंकार-
वृषभ-जिनचरण-परिशीलन-लब्धप्रताप-ब्रह्ममंगलाग्रज-राजराजेश्वरपूरमल्लेष्ट-

ब्रह्मचारीश्वर-स्थविराचार्य-श्रीकेशवसेन-कृष्णजिष्णु-विरचिते ब्रह्मवर्धमान-साहाय्यसापेक्षे श्रीकर्णदेवातिशय-निर्वाण-वर्णन नाम चतुर्विंशतितमः स्कन्ध समाप्तः ॥२४॥

## ४२. सप्तव्यसनकथासमुच्चय ( भ० सोमकीर्ति )

आदिभाग :—

प्रणम्य श्रीजिनान् सिद्धान् आचार्यान् पाठकान् यतीन्।
सर्वद्वन्दविनिर्मुक्तान् सर्वकामार्थदायकान् ॥१॥
ततोपि शारदादेवीं कल्याणावलिवल्लरीं।
जिनेन्द्रवदनोद्भूता नत्वा भक्त्या प्रमादितः ॥२॥
गुरूणा चरणं(णौ) नत्वा वक्ष्ये बुद्धयानुसारतः।
सप्ताना व्यसनाना हि कथा भव्यहिताय वै ॥३॥

अन्तभाग :—

नन्दीतटाके विदिते हि सघे श्रीरामसेनास्य पद-प्रसादात्।
विनिर्मितो मंदधिया ममायं विस्तारणीयो भुवि साधुसघैः ॥६९॥
यो वा पठति विमृश्यति भव्योपि [सु]भावनायुक्तः।
लभते स सौख्यमनिशं ग्रन्थ [श्री]सोमकीर्तिना रचितं ॥७०॥
रसनयनसमेते वाणयुक्तेन चन्द्रे(१५२६)
गतवति सति नूनं विक्रमस्यैव काले।
प्रतिपदि धवलायां माघमासस्य सोमे
हरिभदिनमनोज्ञे निर्मितो ग्रन्थ एष ॥७१॥
सहस्रद्वयसंख्योऽयं सप्तषष्ठिसमन्वितः (२०६७)।
सप्तैव व्यसनाद्यश्च कथासमुच्चयो ततः ॥७२॥
यावत्सुदर्शनो मेरुर्यावच्च सागरा धरा।
तावन्नन्दत्वयं लोके ग्रन्थो भव्यजनाश्रितः ॥७३॥

इतिश्री इत्यार्षे भट्टारक-श्रीधर्मसेनाभः-श्रीभीमसेनदेवशिष्य-आचार्य-

सोमकीर्ति-विरचिते सप्तव्यसनकथासमुच्चये परस्त्रीव्यसनफलवर्णनो नाम सप्तमः सर्गः । इति सप्तव्यसनचरित्रकथा संपूर्णा ।

## ४३. प्रद्युम्नचरित्र ( भ० सोमकीर्ति )

**आदिभाग :—**

श्रीमंत सन्मति नत्वा **नेमिनाथं** जिनेश्वरं ।
विश्वजेताऽपि मदनो बाधितु नो शशाक यं ॥१॥
**वर्द्धमानं** जिनं नत्वा वर्द्धमान सतामिह ।
यद्रूपदर्शनाज्जातस्सहस्रनयनो हरिः ॥२॥
प्रणम्य **भारतीं** देवी जिनेन्द्रवदनोद्गता ।
कृष्णपुत्रस्य चारित्र वक्ष्ये सूत्रानुसारतः ॥३॥
यदुक्तं चात्र विद्वद्भिर्महासेनादिसूरिभि ।
तत्कथ शक्यते नूनं मया बालेन भाषितु ॥४॥
तथापि तत्क्रमाभोजप्रणामार्जितपुण्यतः ।
श्रीप्रद्युम्नाभिध ग्रन्थ प्रवक्तु मे श्रमो न हि ॥५॥

× + × ×

**जिनसेनादिभिः** पूज्यैराचार्यैर्यन्निरूपित ।
करोमि शक्तिहीनोऽहं तत्पादाम्बुजसेवनात् ॥१२॥

**अन्तभाग :—**

**नन्दीतटाख्ये** विमले सुगच्छे **श्रीरामसेनो** गुणवारिराशिः ।
बभूव तस्यान्वयशोभकारी श्रीरत्नकीर्तिर्दुरितापहारी ॥१६६॥
**श्रीलक्ष्मिसेनोत्र** ततो बभूव शीलालयः सर्वगुणैरुपेतः ।
तस्यैव पट्टोद्धरणैकधीरः **श्रीभीमसेनः** प्रगुणः प्रवीरः ॥१६७॥
**श्रीभीमसेनस्य** पदप्रसादात् **सोमादिसत्कीर्तियुतेन** भूमौ(लोके) ।
रम्यं चरित्रं विततं स्वभक्त्या संशोध्य भव्यैः पठनीयमेतत् ॥१६८॥

संवत्सरे सत्तिथिसंज्ञके वै वर्षेऽत्र त्रिशैकयुते (१५३१) पवित्रे ।
विनिर्मितं पौषसुदेश्च(?)तस्या त्रयोदशी या बुधवारयुक्ता ॥१६६॥
( आगे ३ पद्य आशीर्वादादिके हैं )

इति श्रीप्रद्युम्नचरित्रे श्रीसोमकीर्त्याचार्य-विरचिते श्रीप्रद्युम्न शंवर-अनुरुद्धादिनिर्वाणगमनो नाम षोडशः सर्गः समाप्तः ॥१६॥ सर्वसंघस्य-कल्याणमस्तु । ग्रन्थाग्रंथ ४८५० ॥

[नोट—आराके जैनसिद्धान्तभवनमें इस ग्रन्थकी जो प्रति संवत् १७६६ ज्येष्ठ शुक्ल ६ की लिखी हुई सन् १६२० में नं० १४७ पर दर्ज है उसके अन्तमे सुर्खीसे यह एक लाइन लिखी हुई है :—
"संवत् १७६५ वर्षे फाल्गुणमासे सुकलपक्षे द्वादसी दिने नादर-साह बादसाहने दिल्लीमैं कतलाम कीया मनुष्योंका प्रहर तीन ३"]

## ४४. सुभौम-चक्रि-चरित्र ( भ० रत्नचन्द्र )

आदिभाग :—

श्रीमंतं त्रिजगन्नाथं प्राप्तानंतचतुष्टयं ।
स्मरताऽर जिनाधीशं संसारोत्तारकारणं ॥१॥
( आगे शेष तीर्थंकरों तथा सिद्धादिके स्मरणके ६ पद्य हैं )
वन्दे वृषभसेनादीन् गौतमान्तान् गणेशिनः ।
दीप्तसप्तर्द्धिदीप्राङ्गाश्चतुर्थावगमत्विषः ॥८॥
गुरवः कुन्दकुन्दाद्या गुणचन्द्रा गुणाकराः ।
ध्यानोष्मप्रहतोग्राघशैत्यास्ते सन्तु सिद्धये ॥६॥
श्रीरत्नकीर्तये नित्यं नमः श्रीयशकीर्तये ।
नमः श्रीगुणचन्द्राय जिनपूर्णेन्दवे नमः ॥१०॥
कृत्वेति मंगलं भव्यं क्रियमाणार्थसिद्धिदं ।
समुद्धृत्य पुराणाब्धेश्चरित्रं रच्यते मया ॥११॥

अरतीर्थंकृतस्तीर्थे वर्तमानेऽजनिष्ट तत् ।
सत्सपारशुरामीयं सौभौम चरितं वरम् ॥१२॥

**अन्तभाग :—**

अथासीन्मूलसंघेस्मिन् गच्छेसारस्वताभिधे ।
मुनिश्रीकुन्दकुन्दाख्यः श्रीसीमधरतीर्थगः ॥१॥
तस्यान्वये विदा मान्यः पद्मनन्दी यतीश्वरः ।
भव्यागि पद्मनंदीव समभूत्तपसा निधिः ॥२॥
भट्टारकवरेरायोऽस्य पट्टे सकलकीर्तिवाक्(भाक् ?) ।
धर्म्मः प्रकाशितो येन सजीयाज्जगदीश्वरः ॥३॥
गुरुर्भुवनकीर्त्याख्यस्तत्पट्टोदयभानुमान् ।
जातवान् जनितानन्दो वनवासी महातपः ॥४॥
गुरुभ्राता तदीयोऽभूद्ररत्नकीर्तिर्गणाऽग्रणी ।
स्थविरो मडलाचार्य्यपदभाग्धर्म्मकार्यकृत् ॥५॥
तत्पट्टे मंडलाचार्यो यशःकीर्तिर्यशोनिधि-
रजायताऽऽगमाध्यात्मपुराणार्थविचक्षणः ॥६॥
वादित्वस्य परं सीमा गमकस्य परं पद ।
कवित्वादेः परं धाम गुणचन्द्रस्तदन्वये ॥७॥
जिनचन्द्रो जयत्वत्र बलात्कारगणाग्रणी-
स्तत्पट्टे सर्वथैकान्तनिर्जिताशेषवाक्सूरि (वादिनः?) ॥८॥
तत्पट्टे सकलचन्द्रोऽभूत्तदीये विपुलोदये ।
सैद्धान्तिकः सता वंद्यः सूरिवर्यो विदाम्वरः ॥९॥
तस्य पट्टे वरीवर्ति भट्टारकपदस्थितः ।
रत्नचन्द्रो विदामान्यः स्याद्वादसकलार्थवित् ॥१०॥
सम्वत्षोडशाख्याते त्र्यशीतिवत्सराकिते(१६८३) ।
मासे भाद्रपदे श्वेतपञ्चम्या गुरुवारके ॥११॥

पत्तने पाटलीपुत्रे मगधांत:प्रवर्तिनी ।
स्वर्धुनीतटगे पार्श्वे सुदर्शनालयमाश्रिते ॥१२॥
सलेमसाहिसद्राज्ये सर्वम्लेच्छाधिपाधिपे ।
रक्षत्यत्र धराचक्रं निर्जिताखिलविद्विषि ॥१३॥
श्रीमत्प्रभाचन्द्रगणीन्द्रपट्टे भट्टारकश्रीमुनिचन्द्रकीर्तेः ।
पट्टाबरोद्भासनभानुमाली भट्टारकोऽभूद्दिविजेन्द्रकीर्तिः ॥१४॥
तच्छिष्यदाम्नायकौ हि सुभगौ खण्डेलवालान्वयौ ।
श्रीतेजपाल-हेमनामपरमौ धनराज-रेखागजौ ।
संप्रीत्यौ गुरुभक्तिभाजनपरौ सद्दर्शनालंकृतौ ।
चक्राते सुभौमचक्रिचरिते साहाय्यसात्तेपता ॥१५॥
सौभाग्यगोत्रे तेजाख्यो बुधादिषट्संयुतः ।
पट्टणिगोत्रजो हेमपट्टणो च तदन्वये ।
सम्मेदाचलयात्रार्थं रत्नचन्द्रास्समागताः ।
जगन्महन्नात्मजाचार्य्यं जयकीर्तिभिरन्वतः ॥१६॥
श्रीमत्कमलकीर्त्याह्वैः सूरिभिश्च सुवर्णिभिः ।
कल्याण-कचराख्यान-कान्हजी-भोगिदासकैः ॥१७॥
श्रीमद्हुम्बडजातीय-मह्रीभ्रस्त्वणिक्पतिः ।
चम्पाकुक्षिसमुत्पन्नो रत्नचन्द्रो व्यरीरचन्॥१८(त्रिभिः कुलकं)
श्रीमत्खंडेलवालेषु श्यग्रवालेषु दानिषु ।
जैसवालेषु सद्भक्तिकुर्व्वत्सु श्रावकेषु च ॥१६॥
धनराड्-केसि-पुत्रस्य तेजपालविपश्चितः ।
साहाय्याखिलसामग्रीसापेक्ष्य स्वेप्सितप्रद ॥२०॥
श्रीमत्खडेलवालार्य्यो हीराख्यभ्रातृजान्वितः ।
हमीरदेपतिहेमराज कारितवानिद चरितं ॥२१॥(युग्मं)
आदयवाग्वरदेशस्थ सागपत्तन-वासिनः ।
हेमाख्य-श्रेष्टिन: पुत्रो जयतान्मङ्गलाभिधः ॥२२॥

बहुश्राणकृष्णादासस्य क्षत्रियान्वयमन्मथो ।
महौजसौ कुमारौ स्त राजसिंहऽमराऽभिधौ ॥२३॥
भीमाख्याह्वाननात्तत्राकार्यं श्रीहेमकीर्तय ।
यं पट्टे स्थापयामासूरत्नेन्दु सघसादरात् ॥२४॥
तेनेदं चरितं वर्णिजेसराज-प्रसादतः ।
वादिचन्द्रानुभावाच्चाऽऽचन्द्रार्कं जयताच्चिरं ॥२५॥

एकोऽपि सिंहसदृशस्सकलावनीशो हत्वा पितुर्वधकृतो नरकं प्रपद्य ।
दुःखं प्रभुज्य बहुधा भरतेऽत्र तस्मान्निर्गत्य तीर्थपदभाग्भविताऽस्तु सिद्धयै २६

इति श्रीसुभौमचरित्रे सूरिश्रीसकलचन्द्रानुचर-भट्टारकश्रीरतनचन्द्र-विरचिते विबुधश्रीतेजपालसाहाय्यसापेक्ष्ये श्रीखण्डेलवालान्वयपट्टणिगोत्राम्बरादित्य श्रेष्ठिश्रीहेमराजनामांकिते सुभौमनरकप्राप्तिवर्णनो नाम सप्तमसर्गः ।

## ४५. होलीरेणुकाचरित्र ( प० जिनदास )

**आदिभाग :—**

श्रीसर्वज्ञं नाभिसूनुं जिनेन्द्रं भक्त्या वंदे मोहवल्ली-गजेन्द्रं ।
स्वात्मज्ञानैः सदृशीभूतखेन्द्रं लक्ष्म्या युक्तं कामपद्मद्विजेन्द्रं ॥१॥
सद्धर्माणां कल्पवल्लीं कवीनां भूयो नत्वा शारदां पारदां च ।
संसाराब्धेर्भव्यलोकानुकूलां नित्यां वंद्यां दायिनीं सन्मतेश्च ॥२॥
सर्वैर्देवैः संस्तुता चेन्द्रमुख्यैर्नागेन्द्राद्यैः संनुता पूजिता च ।
मर्त्यैर्ल्लोके चक्रिमुख्यैः किमुक्तं प्राज्येनार्य्या वाच्ययाऽगोचरा च ॥३॥
सत्याचारान् गौतमादीन् गुरूंश्च सद्धर्म्माणां मंगलानां च दातॄन् ।
वक्ष्ये होलीपर्व्व धूलेश्च पर्व्व सम्यग्दृष्टेर्निर्मलत्वाय स्वस्य ॥४॥

× × × ×

ललितकीर्तिमुनीश्वरनोदितस्तदपि सच्चरितं रचयाम्यहम् ।
न हि कथं समुदेति कलंकयुक् शशधरो विमले गगनाङ्गणे ॥७॥

अन्तभाग :—

पूर्वं हरपतिर्नाम्ना लब्ध-पद्मावती-वरः।
पेरोसाहिनरेन्द्रास-सत्पण्डितपदोऽप्यभूत् ॥२६॥
पद्माऽभिध' पद्मविशालनेत्रः तदीयवंशाम्बरभानुरासीत्।
येन प्रदत्त बहुधा जनेभ्यो दान सदानेकगुणालयेन ॥३०॥
ग्यासससाहिनरेन्द्राच्च येनाप्ता बहुमान्यता।
साकुंभरीपुरे रम्य कारित जिनमन्दिर ॥३१॥
आज्ञा यस्य न लोपिता क्षितितले कैश्चिन्नरेन्द्रैरपि
दुष्टव्याधिगजेन्द्रपञ्चवदनो मिथ्यात्वविध्वंसकः।
नित्य यः कृतवान् जिनेश्वरमहाकल्याणकाना विधि
सत्पाण्डित्यपदस्थितश्चतुरताहंसीसरो भासुरः ॥३२॥
तत्पुत्रो बिझनामाभूत् प्रसिद्धो भुवि वैद्यराट्।
नसीरसाहिभूपाल-लब्धोत्कर्षो विशालधीः ॥३३॥
माननीयो नरेन्द्राणा भूपतिर्वणिजामिव।
दान-पूजाद्वितीयश्च सर्वविद्याविदावरः ॥३४॥
अयं चिर स्थिरीभूय गृहे वैभवसयुते।
पश्चाद्धि व्रतिको नूनं समभूत्कर्महानये ॥३५॥

द्वितीयपुत्रोपि सुहृज्जनाख्यो विवेकवान्वादिगजेन्द्रसिंहः।
आसीत्सदासर्वजनोपकारी खानि सुखाना जिनधर्मचारी ॥३६॥
भट्टारक-श्रीजिनचन्द्रपट्टे भट्टारकोऽय समभूद्गुणाढ्यः।
प्रभेन्दुसंज्ञो हि महाप्रभावः त्यक्त्वा बिभूति नृपराजसाम्या ॥३७॥

बिझाभिधस्य तनयो धर्मदासाह्वयोप्यभूत्।
अभिमानहिरण्याद्रिर्वादिनक्षत्रभास्करः ॥३८॥

विवेकिनो वै महमूदसाहि-नृपेण दत्ता बहुमानता हि।
अस्यापि सद्वैद्यशिरोमणेश्च पद्मावतीदत्तवरस्य नित्यं ॥३९॥

अयं विख्यातकीर्तिश्च रूपनिर्जितमन्मथः ।
सर्वलोकोपकारी च दयालुर्बुद्धिसागरः ॥४०॥
यत्समो दृश्यते नैव कोप्यन्यः पृथिवीतले ।
महाभाग्यश्च सद्वैद्यो बहुना भाषितेन किं ॥४१॥

धर्मश्रीरितिनामतोऽस्य वनिता देवादि-पूजा-रता ।
सौभाग्यादि-गुणान्विताऽतिविमला विख्यातकीर्तिः खलु ।
आसीत्सर्वहिता सुवाक्यकथका दानाऽद्वितीया परा
सम्यग्दृष्टियुता प्रफुल्लवदना दीनोपकारान्विता ॥४२॥

विवेकसत्क्षेत्रस्य परा सीमेव याऽभवत् ।
रोरुसंतापिताना च शरदश्चन्द्रिकेव हि ॥४३॥

रेखानामास्ति पुत्रो वरगुणनिलयो ह्य तयोः सत्प्रतापो
वैद्याधीश प्रसिद्धो विविधजननुतो धैर्यमेरुः सदैव ।
भोगाढ्यो बुद्धिसिंधुः शशधरवदनः स्वर्णकातिः सभार्हः
सद्विद्यालकृतागो विविधसुखनिधिः भाग्यवाश्चोपकारी ॥४४॥

सन्मानितो रणस्तभे दुर्गेऽयं बहुसंपदः ।
शेरसाहिनरेन्द्रेण गाभीर्यगुणसागरः ॥४५॥
माननीयो नरेन्द्राणा बहूना वणिजा तथा ।
माहम्री चास्त्यसौ नूनमहंकारसुरालयः ॥४६॥
यस्य हृत् न मर्यादा क्षमः कोऽपि न दृश्यते ।
नर. प्रियतमस्याऽपि सर्वेषा च विवेकिना ॥४७॥
सौन्दर्य-जितकन्दर्प्पः सुहृदब्जदिवाकरः ।
योऽस्ति दुर्जननक्षत्रहमो विमलमानसः ॥४८॥
वाछितार्थप्रदो योऽस्ति सेवकाना हितार्थिना ।
कलान्वयप्रवीणश्च सन्मनुष्यशिरोमणिः ॥४९॥
भार्याऽस्य सद्गुणोपेता नाम्ना रिषसिरि स्मृता ।
गृहे दक्षा च दीनाना कल्पवल्लीव निर्म्मला ॥५०॥

सदाचाररता नून महाविनयकारिणी ।
ख्यातनिर्मलकीर्तिश्च शीलसम्यक्त्वसंभृता ॥५१॥
विद्यते ह्य तयोः पुत्रो जिनदासाभिधो वरः ।
बुध' सज्जनमर्यादा माननीयो मनीषिणा ॥५२॥
अधीती वहुविद्यासु आयुर्वेदे विशेषतः ।
अपि योऽस्ति महाधीमान् वरिष्ठो हि विवेकिना ॥५३॥
नाम्ना भर्तुर्जवणाद(णादे?)इति ज्ञानदयान्विता ।
जिनदासाऽभिधानस्य भार्या स्याच्छीलसभृता ॥५४॥
सती सीतासमा साऽपि भर्तारमनुसारिणी ।
धर्मदान-क्रियायुक्ता दम्पत्योर्वरयोस्तयोः ॥५५॥
पुत्रोऽस्य(स्ति)नारायणदाससंज्ञो विराजते निर्मललक्षणैर्हि ।
स्वर्णप्रभः पंकजपत्रनेत्र' पितामहादृष्टिपयोजभानुः ॥५६॥
स्वकीयवशाम्बरपूर्णचन्द्रः सुबुद्धिमान् य' शुकनाश(स)कोस्ति ।
सुहृज्जनानदकरो वरिष्ठो दरिद्रवल्ली द्विरदः प्रहृष्टः ॥५७॥
श्रीरणस्तभसद्दुर्ग-समीपस्थे सुखप्रदे ।
नानावृक्षैः समाकीर्णे सरोभिः सकजैस्तथा ॥५८॥
जिनागारयुते रम्ये नवलक्षपुरे शुभे ।
वासिना जिनदासेन पडितेन सुधीमता ॥५९॥
दृष्ट्वा पूर्व्वकथामेकपचाशत्(५१)श्लोकसयुता ।
पुरे सेरपुरे शातिनाथचैत्यालये वरे ॥६०॥
वसुखकायशीताशुमिते(१६०८) सवत्सरे तथा ।
ज्येष्ठमासे सिते पक्षे दशम्या शुक्रवासरे ॥६१॥
अकारि ग्रथः पूर्णोऽय नाम्ना दृष्टिप्रबोधकः ।
श्रेयसे बहुपुण्याय मिथ्यात्वापोहहेतवे ॥६२॥
भट्टारक-प्रभाचन्द्र-शिष्यो यो विद्यते भुवि ।
अनेकगुणसम्पन्नो धर्मचन्द्राभिधो मुनिः ॥६३॥

सम्पूर्ण सिद्धांत-विचारणैकः धीरो वरो ज्ञातमहाविवेकः ।
चारित्रपात्र विधिपूतगात्रः स मे क्रियाद्बोधयुतो रमा हि ॥६४॥
अस्यास्ति शिष्यो ललितादिकीर्तिः मुनिः सदा भव्यजनैश्च पूज्यः ।
दयार्द्रचित्तो विनयेन युक्तः प्रभाववान् शीलपरश्च विद्वान् ॥६५॥
जिनेन्द्रपादाबुज सत्प्रसादाज्जीयाच्चिर श्रीजिनदाससंज्ञः ।
साकं हि नारायणदास-नाम्ना पुत्रेण सल्लक्षणसंयुतेन ॥६६॥

जिनेन्द्रचरणाभोजपूजनं च भवेद्भुवि ।
यावत्तिष्ठति हेमाद्रिर्यावच्चद्रदिवाकरौ ॥६७॥

जिनेशवाणी सुखदा च यावत्सतः कृपार्द्राश्च महीतलेऽपि ।
सुरापगा श्रीजिनदेवभक्तिर्महामुनीना निवहः कृपार्द्रः ॥६८॥

यावत्पचनमस्कारमत्रस्तावदयं शुभः ।
ग्रंथस्तिष्ठतु पुण्याय वाच्यमानो बुधैर्जनैः ॥६९॥
शातिः श्रीजिनमार्गस्य नरेंद्रस्य तपोभृता ।
प्रजाना काव्यकर्तृणा भवतात्सुहृदोऽपि च ॥७०॥
यत्किंचिदधिकं न्यून शास्त्रेऽस्मिन्नादितं मया ।
जाड्यात्तज्जिन क्षतव्य दयासागरवारिज ॥७१॥
त्रिवाद्धिवसुसंख्यैरनुष्टुप्श्लोकैः(८४३)प्रमाणता ।
ग्रंथस्यास्य सुविद्वद्भिर्जिनदासैः कृता स्वयं ॥७२॥

इति श्रीपडितजिनदासविरचिते मुनिश्रीललितकीर्तिनामाङ्किते होली-रेणुकापर्वचरित्रे दर्शनप्रबोधनाम्नि धूलिपर्व-समयधर्म-प्रशस्तिवर्णनो-नाम सप्तमोऽध्याय । [जयपुर प्रति

## ४६. मुनिसुव्रतपुराण (ब्रह्म कृष्णदास)

आदिभाग :—

देवेन्द्राच्चिंतसत्पाद-पकजं प्रणमाम्यहं ।
आदीश्वर जगन्नाथ सृष्टिधर्मकरं भुवि ॥१॥

कनककञ्चारसंछायं वृषभाकं वृषोद्धुर ।
वृषभ जगता साक्षाच्छर्मणोऽनतमिद्धये ॥२॥

अन्तभाग :—

काष्ठासंघे वरिष्ठेऽजनि मुनिपनुतो रामसेनो भदंत-
स्तत्पादाभोजसेवाकृत-विमलमति-श्रीभीमसेन क्रमेण ।
तत्पट्टे सोमकीर्तिर्यवनपति-कराभोज-संपूजितांह्रि-
रेतत्पट्टोदयाद्रौ जिनचरणलयी श्रीयश कीर्तिसेनः(?)॥६१॥

कमलपतिरिवाभूत्सदुदयाद्यतसेन
उदितविशदपट्टे सूर्यशैलेन तुल्ये ।
त्रिभुवनपतिनाथांह्रिद्वयासक्तचेना-
स्त्रिभुवनजनकीर्तिर्नाम तत्पट्टधारी ॥६२॥

रत्नभूषणभदत इनामो न्याय-नाटक-पुराण-सुविज्ञः ।
वादि-कुजर-घटाकर-सिंहस्तत्पदेऽजनि रजनभक्त. ॥६३॥
देवतानिकरसेवितपादः श्रीवृषेशविभुपादप्रसादात् ।
कोमलेन मनसा कृत एष ग्रथ एव विदुषा हृदिहार' ॥६४॥
शोधयतु विबुधा विविरोधा यत्पुराणमद एव मयोक्तं ।
सभवन्ति सुजना. खलु भूमौ ते सदा हितकरा हतपापा' ॥६५॥
इन्द्वष्टषट्चंद्रमितेऽथ वर्षे(१६८१) श्रीकार्तिकाख्ये धवले च पक्षे ।
जीवे त्रयोदश्यपरान्हया मे कृष्णेन सौख्याय विनिर्मितोऽयं ॥६६॥
लोहपत्तननिवासमहेभ्यो हर्ष एव वणिजामिव हर्षः ।
तत्सुत. कविविधिः कमनीयो भाति मगल-सहोदर कृष्ण' ॥६७॥
श्रीकल्पवल्लीनगरेगरिष्ठे श्रीब्रह्मचारीश्वर एष कृष्ण ।
कंठावलव्यूर्जितपूरमल्लः प्रवर्द्धमानो हितमाततान ॥६८॥

पचविंशतिसयुक्तं सहस्त्रत्रयमुत्तम (३०२५) ।
श्लोकसंख्येति निर्दिष्टा कृष्णेन कविवेधसा ॥६९॥

इति श्रीपुण्यचन्द्रोदये मुनिसुव्रतपुराणे श्रीपूरमल्लांके हर्ष-वीरिका देहज-

ब्रह्मश्रीमगलदासाग्रज ब्रह्मचारीश्वर-कृष्णदास-विरचिते रामदेव शिवगमन नाम त्रयोविंशतितमः सर्गः समाप्तः ॥२३॥

## ४७. चन्द्रप्रभ-चरित ( कवि दामोदर )

आदिभाग :—

श्रियं चन्द्रप्रभो नित्या चन्द्रदश्चन्द्रलाञ्छनः ।
भव्यकुमुदचन्द्रो वश्चन्द्र-प्रभो जिनः क्रियात् ॥१॥
कुशासन-वचोव्रूडज्जगत्तारण-हेतवे ।
तेन स्ववाक्य सूरास्त्रैर्धर्मपोतः प्रकाशित ॥२॥
युगादो येन तीर्थेशा धर्मतीर्थः प्रवर्त्तित. ।
तमहं वृपभ वन्दे वृषद वृषनायकम् ॥३॥
चक्री तीर्थकरः कामो मुक्तिप्रियो महाबली ।
शान्तिनाथः सदा शान्ति करोतु न' प्रशान्तिकृत् ॥४॥
येन विध्वंसितो दुष्टः प्रद्युम्नभूपतिर्वरं ।
मुक्तिसीमंतिनीनाथ वीरं नमामि तं जिनम् ॥५॥
( इसके बाद शेष तीर्थकरों तथा सिद्धादिकोंका स्मरण है )
गुणान्विता शुभाकारा वृत्तमुक्ताफलाचिताम् ।
मालामिव सदाभूपा स्वकण्ठे भारतीं दधे ॥११॥
जगद्धितकरं सार विश्वतत्वप्रकाशकं ।
स्तौमि जिनागम नित्यं ज्ञानाप्तयेऽघनाशनं ॥१२॥
परहित समुद्युक्तास्त्रैलोक्येश्वर संस्कृतान् ।
गौतमादीन्मुनीन् भक्त्या स्तुवे तद्गुणसिद्धये ॥१३॥
सीमधर-मुखात् श्रुत्वागमं येनाऽत्र दुःपमे ।
प्रवर्त्तितं हितं कुन्दकुन्दाचार्यं नमाम्यहम् ॥१४॥
परमतेभ-नागारिर्यः कवेर्गुण-सागरः ।
तद्गुणसिद्धये तस्मै नमोऽकलङ्क-योगिने ॥१५॥

यद्भारत्याः कविः सर्वोऽभवत्सज्ज्ञान-पारगः ।
तं कविनायकं स्तौमि समन्तभद्र-योगिनम् ।।१६।।
नाभेयस्य पुराणाब्धिः कृतो येन सुबुद्धिदः ।
स्वसिद्धयै शिरसा वन्दे जिनसेनकवीश्वरं ।।१७।।
सर्वेषां तीर्थकर्तृणां चरिताब्धिः प्रकाशितः ।
येन तं गुणभद्राचार्यकविं नौमि सततम् ।।१८।।
चन्द्रप्रभजिनेशस्य चरितं येन वर्णितं ।
तं वीरनन्दिनं वन्दे कवीशं ज्ञानलब्धये ।।१९।।
येऽन्येऽपि कवयोऽभूवन् जिनगुण-प्रकाशकाः ।
कवित्वसिद्धये सन्तु सर्वे ते मम संस्तुताः ।।२०।।

**अन्तभाग :—**

भव्यांबुजौघदिनकृद्गणभृत्समानो निश्शेषमुन्यधिपतिः शुभमंडलेशः ।
राजाधिराज-गणसेवित-पादपद्मः ख्यातो बभूव सुवचा भुवि नेमिचन्द्रः ।।६८

सुगुण-गण-समुद्रो विष्टपे ख्यातकीर्तिर्मुनिनरपतिवृन्दैः पूजितांघ्रिः सुरूपी ।
विजितसकलवादी तस्य पट्टे बभूव महिमितजिनधर्मा श्रीयशःकीर्तिनामा ।।

योगीशभूभृद्गणलब्धपूजः कवीशसेव्यः भुवनप्रसिद्धः ।
पट्टे तदीये जितकाममायः श्रीभानुकीर्तिर्दृढशान्तमूर्तिः ।।७०।।
सिद्धान्तादि-पुराणकोशजलधिः प्रध्वस्त मिथ्यातमः
भव्यांभोज-रविः समस्तगुणभृद्धर्माब्धिचन्द्रोपमः ।
विख्यातो भुवने तपोभरधृतो गच्छाधिराजः शमी
शिष्यस्तस्य सुयोगिसंस्तुतपदः श्रीभूषणो राजते ।।७१।।
भव्यांभोजाऽर्कभानुर्मुनिनृपतिगणैः सेवितांघ्रिः प्रसिद्ध-
स्तर्कालंकारशास्त्रप्रवचन-पटुधीर्ध्वस्त-मिथ्यापवादः ।
उद्यद्भानुप्रतापो गुणगणनिलयो जैनधर्मप्रकाशी
तत्पट्टेशस्तपस्वी प्रकटमुमहिमा धर्मचन्द्रो विभाति ।।७२।।

श्रीमूलसंघसुपतेः परिशान्तमूर्तेः चन्द्रप्रभेशचरितं भुवि सारमेतत् ।
शिष्येण तस्य चरितं बहुसौख्यहेतुर्दामोदरेण विदुषा तनुबुद्धिभाजा ॥७३॥
निश्शेषशास्त्रनिपुणाः परकृत्यचित्ताः कृत्स्नप्रदोषरहिता बहुकीर्तिभाजः ।
चन्द्रप्रभस्य चरितं परिशोधयन्तु सारं सता समुदयाः स्वगुणप्रभुज्याः॥७४॥
जिनरुचिदृढमूलो ज्ञानविज्ञानपीठः शुभवितरणशाखश्चारुशीलादिपत्रः ।
सुगुणचयसमृद्धः स्वर्गसौख्यप्रसूनः शिवसुखफलदो वै जैनधर्मद्रुमोऽस्तु ॥८४॥

भूभृन्नेत्राचलशशधराङ्कप्रमे(१७२७)
वर्षेऽतीते नवमिदिवसे मासि भाद्रे सुयोगे ।
रम्ये ग्रामे विरचितमिदं श्रीमहाराष्ट्रनाम्नि
नाभेयस्य प्रवरभवने भूरिशोभानिवासे ॥८५॥
रम्य चतुःसहस्राणि पंचदशयुतानि(४०१५) वै ।
अनुष्टुप्कैः समाख्यातं श्लोकैरिदं प्रमाणतः ॥८६॥

इति श्रीमण्डलसूरिश्रीभूषण-तत्पट्टगच्छेशश्रीधर्मचन्द्रशिष्य-कविदामोदर-विरचिते श्रीचन्द्रप्रभचरिते श्रीचन्द्रप्रभनिर्वाणगमनवर्णनो नाम सप्तविंशतितमः सर्गः।

## ४८. ज्ञानार्णवगद्य-टीका (श्रुतसागर सूरि)

**आदिभाग :—**

शिवोऽयं वैनतेयश्च स्मरश्चास्यैव कीर्तितः ।
अणिमादि-गुणाऽनर्घ्यरत्न-वार्धिर्बुधैर्मतः ॥१॥

**अन्तभाग :—**

आचार्यैरिह शुद्धतत्वमतिभिः श्रीसिंहनंद्याह्वयैः
संप्रार्थ्य श्रुतसागरं कृतिवरं भाष्यं शुभं कारितम् ।
गद्यानां गुणवत्प्रियं विनयतो ज्ञानार्णवस्यान्तरे
विद्यानन्दिगुरु-प्रसाद-जनितं देयादमेयं सुखम् ॥

इति श्रीज्ञानार्णव-स्थित-गद्य-टीका तत्वत्रय-प्रकाशिनी समाप्ता ।

## ४९. सम्मेदशिखरमाहात्म्य ( दीक्षित देवदत्त )

**आदिभाग :—**

ध्यात्वा यत्पदपाथोज भव्याः संसारपारगाः ।
सारात्सार सदाधार तमर्हन्त नमाम्यहम् ॥१॥
गुरु गणेश वाणीं च ध्यात्वा स्तुत्वा प्रणम्य च ।
सम्मेदशैलमाहात्म्यं प्रकटीक्रियते मया ॥२॥
जिनेन्द्रभूषणयतिर्यति-धर्मपरायणः ।
तस्योपदेशात्सम्मेदवर्णने मद्गिरोत्सुका ॥३॥
भट्टारकपदस्थायी स यतिः सत्कविप्रियः ।
भवाब्धितरणायेह सत्कथापोतसज्जकः ॥४॥
माहात्म्यपूर्तिसिद्ध्यर्थं वन्दे सिद्धगणं हृदि ।
सद्बुद्धि ते प्रयच्छतु वाणीं मे काव्यरूपिणीम् ॥५॥
सम्मेदशैलवृत्तातो महावीरेण भाषितः ।
गौतम प्रति भूय. स लोहार्येण धीमता ॥६॥
तत्सद्वाक्यानुसारेण देवदत्ताख्यसत्कविः ।
सम्मेदशैलमाहात्म्यं प्रकटीकुरुतेऽधुना ॥७॥

**अन्तभाग '—**

इति श्रीभगवल्लोहाचार्यानुक्रमेण-श्रीभट्टारकजिनेन्द्रभूषणोपदेशाच्छ्री-मद्दीक्षित-देवदत्तकृते श्रीसम्मेदशिखर-माहात्म्ये समाप्तिसूचको एकविंशति-तमोऽध्यायः ॥२१॥ समाप्तोऽयग्रन्थः ॥

## ५०. ध्यानस्तवः ( भास्करनन्दि )

**आदिभाग .—**

परमज्ञानसवेद्य वीतबाध सुखादिवत् ।
सिद्ध प्रमाणतस्सार्वं सर्वज्ञं सर्वदोषक(कृत्?) ॥१॥

अन्तभाग :—

तस्याऽभवत् श्रुतनिधिर्जिनचंद्रनामा शिष्योऽनु तस्य कृति-भास्करनंदिनाम्ना !
शिष्येण संस्तवमिम निजभावनार्थं ध्यानानुग विरचित सुविदो विदंतु ॥१००

इति ध्यानस्तवः समाप्तः ।

## ५१. पदार्थदीपिका ( भ० देवेन्द्रकीर्ति )

आदिभाग :—

श्रीसर्वज्ञं जिनं नत्वा सर्वसत्वहितावह ।
पदार्थदीपिका सारा टीका कुर्वे सुकोमला ॥१॥

अन्तभाग :—

वस्वष्टयुक्तसप्तेन्दुयुते (१७८८) वर्षे मनोहरे ।
शुक्ले भाद्रपदे मासे चतुर्दश्या शुभे तिथौ ॥१॥
ईसरदेति सद्ग्रामे टीका पूर्णितामिता ।
भट्टारक-जगत्कीर्तेः पट्टे देवेन्द्रकीर्तिना ॥२॥
दुष्कर्महानये शिष्यमनोहर-गिरा कृता ।
टीका समयसारस्य सुगमा तत्त्वबोधिनी ॥३॥
बुद्धिसद्भिः बुधैर्हास्यं कर्तव्य न विवेकिभिः ।
शोधनीयं प्रयत्नेन नयतो विस्तरता व्रजेत् ॥४॥
बुधैः संपाठ्यमानं च वाच्यमानं श्रुत सदा ।
शास्त्रमेतच्छुभंकारि चिरं संतिष्ठता भुवि ॥५॥
पूज्य-देवेन्द्रकीर्तेश(तीश-)शिष्येण स्वांतहारिणा ।
नाम्नेयं लिखिता टीका स्वहस्तेन स्वबुद्धये ॥६॥

[ इति समयसारस्य पदार्थदीपिका टीका समाप्ता । ]

## ५२. नागकुमारपंचमीकथा ( प० धरसेन )

आदिभाग —

नेमिं नमत्सुराधीश-मुनाशमनघश्रियम् ।
नत्वा नागकुमारस्य वक्ष्ये सक्षेपतः कथा ॥१॥

अन्तभाग —

आसीद्भूरिगुणाकरस्य गुणिनः श्रीवीरसेनस्तुत·
शिष्य श्रीधरसेनपडित इति ख्यात' सतामीशितु ।
गोनर्दे त्रचितातपस्य वसतौ तेन प्रशान्तात्मना
संवेगार्थमियं विशुद्धमनसा साध्वी कथा श्रेयसे ॥१॥
सोढदेवाख्य-रट्टाभ्या सद्धर्मरसिकत्वतः ।
कारिता पचमी सेयमाऽऽचन्द्रमभिनन्दतु ॥२॥

इति श्रीधरसेनविरचिते नागकुमारपञ्चमीकथासमुच्चये नागकुमारनिर्वाण गमनवर्णनो नाम अष्टमः सर्गः ॥८॥*

## ५३. महीपालचरित्र ( भ० चारित्रभूषण )

आदिभाग —

यस्याशदेशेप्सितकुन्तलाली दूर्वाङ्कुरालीव विभाति नीजा(त्यनीचा ?) ।
कल्याणलक्ष्मीवसतिः स दिश्यादादीश्वरो मंगलमालिका व' ॥१॥
यस्या क्रमोपास्तिवशाज्जडोपि विना श्रम वाङ्मयपारमेति ।
सदा चिदानंदमयस्वरूपा सा शारदा रातु रतिं परा मे ॥२॥

---

* यह प्रशस्ति आजसे कोई ३०–३५ वर्ष पहले सेठ माणिकचन्द हीराचन्द जे० पी० बम्बईके 'प्रशस्तिसंग्रह' रजिष्टर नं० १ परसे उद्धृत की गई थी। मूल ग्रन्थ सामने न होनेसे इस ग्रन्थकी रचना करानेवाले सोढदेव आदिका परिचय नहीं दिया जा सका।

मनोवचःकायकृतोपकाराः जयंति सत सुकृतैकसाराः ।
येषा भिया न स्खलते सता धीर्हित-क्रारास्तेपि जयत्यसतः ॥३॥
अज्ञोपि विज्ञाय कृतप्रसादः परोपकाराय रसाभिराम ।
श्रीमन्महीपाल-नरेश्वरस्य चरित्रमेतद्रचयामि कामं ॥४॥

**अन्तभागः—**

नित्य सच्छुक्लपक्षस्थितिरतिविशदो नाशितश्यामपक्षो ।
विध्वस्ताशेषदोषो बहुमुनिसहितो भूरिशोभाभिरामः ।
विश्वाल्हादं ददानो हतनिखिलनमाः शश्वदासोदया च
श्रीमद्वाराण्याख्यगच्छो परिविधुवदयं राजते शुद्धवृत्त ॥१॥

कल्याणावलिशालिनोऽत्र सुमनःश्रेणीश्रितो विश्रुतः
श्रीमान् मारकरो गणो विजयते यं(यो?) मेरुवन्निश्चलः ।
विश्वालंकरणस्य विस्तृतजुषः सन्नंदतस्याऽन्वह
भाति स्फीतियुतस्य यस्य पुरत' पादा इवान्ये गुणाः ॥२॥
तस्मिन् विस्मयकारिचारुचरितश्चारित्रचूडामणिः
श्रीमान् श्रीविजयेन्दुसूरिरभवद्भव्यागि-चिंतामणिः ।
तत्पट्टे समभून्महीन्द्रमहित' श्रीक्षेमकीर्तिर्गुरुः
कास्कान्शेविबुधान् श्रिनोति निरा यत्कल्पवृत्तिस्तथा ॥३॥

श्रीरत्नाकरसूरयः समभवन् ज्ञानाबुरत्नाकराः
कीर्तिस्फीतिमनोहरा शुभगुणश्रेणीलनाभोधरा ।
यन्नाम्नाऽत्रबलो गणोयमभवद्रत्नाकराख्या परा
ख्यातेन क्षितिमंडलेपि सकले सत्या तमोहारिणा ॥४॥
तस्यानुक्रमपूर्व्वशैलकरणिः कामद्विपोद्यत्सृणिः
सूरीशोऽभयनन्दि इत्यजनि सद्योगीन्द्रचूडामणिः ।
तत्पट्टे प्रकटप्रभावविदिते विध्वस्तवादिघृणिः
जज्ञे श्रीजयकीर्तिसूरिरसमो भव्यात्मचिन्तामणिः ॥५॥

कीर्तिर्यस्य निरस्ततापनिवहा सच्छीलदण्डस्थिता
चंचच्चद्रकलोज्वला दशदिशा श्वेतातपत्रायते ।
तत्पट्टे स्फुटकादिकुजरघटासिहो रुदहोव्रज ।
सूरीन्द्रो जयताच्चिर गणधरः श्रीरत्ननद्याभिध. ॥६॥
तस्यानेकविनेय-सेवितपदाभोज ' 'भव्यावली
चचन्नेत्रचकोरचद्रसदृशस्यानम्रभूमीपते. ।
शिष्याणु रचयाचकार चतुरश्चारित्ररम्याऽभिधो ।
विश्वाश्चर्यंकरं महीपचरित नानाविचारोद्धुर ॥७॥

श्रीरत्नदिगुरुपादसरोरुहालिश्चारित्रभूषणकवियंदिद ततान ।
तस्मिन्महीपचरिते भववर्णनाख्य सर्गः समाप्तमगमत्किल पचमोऽय॥८॥

इति श्रीभट्टारकश्रीरत्ननदिसूरिशिष्य-महाकविवरचारित्रभूषण-विरचिते श्रीमहीपालचरिते पंचमः सर्ग. । इति श्रीमहीपालचरित्र काव्य सपूर्ण । ग्रन्थ स० ६६५ । सवत्सरे गुण-रुद्रनेत्र-वसु-चन्द्रयुते १८३६ का भाद्रपदमास-कृष्णपक्षषष्ठ्या तिथौ । [ जयपुर प्रति

## ५४. मदनपराजय ( ठक्कुर जिनदेव )

**आदिभाग :—**

यदामलपदपद्म श्रीजिनेशस्य नित्य शतमख-शतसेव्यं पद्मगर्भादिवद्य ।
दुरितवन-कुठारं ध्वस्तमोहाधकार सदखिलसुखहेतु त्रि-प्रकारैर्नमामि ॥१॥

यः शुद्ध-रामकुल-पद्म-विकाशनार्को जातोऽर्थिना सु[र]तरुर्भुवि चगदेवः ।
तन्नदनो हरिरसत्कविनागसिंहः तस्मा[द्भि]षग्जनपतिर्भुवि नागदेवः ॥२॥

तज्जावुभौ सुभिषजाविह हेम-रामौ रामात्प्रियकर इति प्रियदोऽर्थिना यः ।
तज्जश्चिकित्सित-महाबुधि-पारमाप्तः श्रीमल्लुगिज्जिनपदाबुज-मत्त भृग ॥३॥

तज्जोह नाग(जिन ?)देवाख्यः स्तोकज्ञानेन सयुतः ।
छदेऽलकार-काव्यानि नाभिधानानि वेद्म्यहं ॥४॥

कथा प्राकृतबंधेन हरदेवेन या कृता ।
वक्ष्ये संस्कृतबंधेन भव्याना धर्मवृद्धये ॥५॥

× × × ×

इति श्रीठक्कुरमाइदसुत-जिनदेव विरचिते स्मरपराजये सुसंस्कृतबंधे मुक्तिस्वयवरो नाम पचमः परिच्छेदः ।

अन्तभाग :—

पाठ्यते यः शृणोतीदं स्तोत्र स्मरपराजय ।
तस्य ज्ञानं च मोक्षः स्यात् स्वर्गादीना च का कथा ॥१॥
तावद्दुर्गतयो भवन्ति विविधास्तावन्निगोद-स्थितिः
तावत्सप्तसुदारुणा हि नरकास्तावद्दरिद्रादयः ।
तावद्दुःसहघोरमोहतमसाच्छन्न मनः प्राणिना
यावन्मार-पराजयोद्भवकथामेता च शृण्वति न ॥२॥
तथा च—शृणोति वा वक्ष्यति वा पठेत्तु यः कथामिमा मारपराजयोद्भवा ।
सोऽसशयं वै लभतेऽक्षयं सुख शीघ्रेण कायस्य कदर्थनं विना ॥३॥
अज्ञानेन धिया विना किल जिनस्तोत्रं मया यत्कृतं
कि वा शुद्धमशुद्धमस्ति सकल नैवं हि जानाम्यहं ।
तत्सर्वं मुनिपुंगवाः सुकवयः कुर्व्वंतु सर्वे क्षमा
संशोध्याशु कथामिमा स्वसमये विस्तारयंतु ध्रुवं ॥४॥

इति मदनपराजयं समाप्त ।

## ५५. श्वेताम्बरपराजय (कवि जगन्नाथ)

आदिभाग :—

बुभुक्षाद्या यमीशान न हि दुःखयितु क्षमाः ।
अनंतसुखसद्भावात्तस्मै श्री नेमये नमः ॥१॥
पदाम्बुज-मधुव्रतो भुवि नरेन्द्रकीर्त्तेर्गुरोः
सुवादिपदभृद्बुधः प्रकरणं जगन्नाथवाक् ।

सिताम्बरपराजयाह्वयमिदं हि चेक्रीयते
जिनागम-विशालधी-विबुध-लालजीकाज्ञया ॥२॥
पंचसहस्रयाद्युक्तं साशयिकैर्यत्कुयुक्तिबलतस्तत् ।
सर्वं प्रत्याचष्टे धीरो वादी जगन्नाथः ॥३॥

इह हि नेमिनरेन्द्रस्तोत्रे स्वोपज्ञे—

"यदुत तव न भुक्तिर्नष्टदुःखोदयत्वाद्वसनमपि न चांगे वीतरागत्वतश्च ।
इति निरुपमहेतू न ह्यसिद्धाद्यसिद्धौ विशदविशददृष्टीना हृदिलः(?)सुयुक्तये"—

इति पद्यमाकर्ण्य लालजीनामवर्णिभिरवादि पद्यस्यास्य वृत्तिकरण-मिवा(षा)त्पंचसहस्रीमतं साशयिककल्पितं खंडनीयं ततस्तन्निमित्तमासाद्य सिताम्बरपराजयं नाम प्रकरणं कुरुते । तत्र तावत् केवलिनि कवलाहारवत्वेन विरोधमभिधत्ते—

अन्तभाग :—

इति दर्पता प्रबलतमयुक्ति-कुलिश-चूर्णिताखिलैकान्त-वादिभूधरै-र्दिगम्बरसुरवरैर्मा विवादेनेति ।

वत्से गुणाभ्रवीतेन्दुयुते (१७०३) दीपोत्सवे दिने ।
भुक्तिवादः समाप्तोऽयं सितम्बर-कुयुक्तिहा ॥१॥

इति श्वेताम्बरपराजये कवि गमक-वादि-वाग्मित्वगुणालंकृतेन खंडिल्ल वंशोद्भव पोमराजश्रेष्ठिसुतेन जगन्नाथवादिना कृते केवलिभुक्तिनिरा-करणं समाप्तम् ।

## ५६. चतुर्विंशतिसन्धानकाव्य-सटीक (कवि जगन्नाथ)

आदिभाग —

श्रेयान् श्रीवासुपूज्यो वृषभजिनपतिः श्रीद्रुमांकोऽथ धर्मो
हर्यंकः पुष्पदन्तो मुनिसुव्रतजिनोऽनन्तवाक् श्रीसुपार्श्वः ।
शांतिः पद्मप्रभोऽरो विमलविभुरसौ वर्द्धमानोप्यजांको
मल्लिर्नेमिर्नमिर्मां सुमतिरवतु सच्छ्रीजगन्नाथधीरं ॥१॥

(स्रग्धरा छन्दात्मक इसी पद्यको २५ वार लिखकर उसका २५ प्रकारसे अर्थ किया है, एक एक प्रकारमें २४ तीर्थंकरोंकी स्तुति अलग अलग और २५ वें में समुच्चय स्तुति २४ तीर्थंकरोंकी की है।)

प्रणम्यांघ्रियुग्मं जिनानां जगन्नाथपूज्यांघ्रिपाथोरुहाणा।
वरैकाक्षरार्थैर्महायुक्तियुक्तैः सुवृत्तिं च तेषां नुतेश्चकरोमि ॥१॥

वाग्देवतायाश्चरणाम्बुजद्वयं स्मरामि शब्दाबुधिपारदं वरं।
यन्नाममात्रस्मरणोछ्युक्तो(द्यतानि ?)हरंत्यघं कोविदमानसानि ॥२॥

अप्रसिद्धनिनादेषु नात्र कार्या विचारणा।
एकाक्षरसुकोषस्य पद्यं दृष्ट्वाऽवगम्यतां ॥३॥

पद्यस्य यस्य कस्यापि वाच्ययुग्मं हि चित्रकृत्।
चतुर्विंशतिसद्वाच्यैरेतत्कुर्वीत किं न शं ॥४॥

इति प्रस्तावना। चतुर्विंशतिजिनानामेकपद्यं कृत्वा तस्य चतुर्विंशतिभिरर्थैर्जगन्नाथस्तान् स्तौतीति तावदादिजिनस्य वृषभस्य स्तुतिः। तथा हि—
असौ लोकोत्तरः वृषभजिनपतिः।

इति श्रीचतुर्विंशतिजिनस्तुतावेकाक्षर-प्रकाशिकायां भट्टारकश्रीनरेन्द्रकीर्ति-मुख्यशिष्य-पंडितजगन्नाथ-विरचितायां प्रथमतीर्थंकरश्रीवृषभनाथस्तुतिः समाप्ता।

अन्तभाग :—

नयनय(नवनव ?)धररूपाके(१६६६) सुवत्से तपोमा-
स इह त्रिशदपंचम्यां च सत्सौरिवारे।
विहितजिनमहोत्रावत्पुरे सौधशुभ्रे
सुजिननुतिमकार्षीच्छ्रीजगन्नाथनामा ॥२६॥

इति श्रीमदेकाक्षरप्रकाशिका चतुर्विंशतिजिनस्तुतिः समाप्तमगमत् श्रीरस्तु। अथ काव्यफलं स्वरूपं च वच्म. ॥

पद्येस्मिन् मयकाकृता नुतिमिमा श्रीमच्चतुर्विंशति-
तीर्थेशा, कलुषापहा च नितरा तावद्भिरर्थैर्वरैः।
प्रत्येकं किल वाच्य-वाचकवैर्बोध्याबुधैर्वृत्तितः
पूर्वाह्णादिषु यो ब्रवीति लभते स्थान जगन्नाथतः ॥१॥
काव्येऽस्मिन्भुवि कोविदा' स्तुतिमये तीर्थंकराणा वरे।
सल्लभ्ये बुधचित्तचमत्कृतिकरे चित्तं दधीध्वं सदा।
वाक्याशुद्धवचोपि यद्भणितितः कुर्वीध्वम(?)त्रापि सत्(श ?)
तस्माच्चि(न्त्य)तिमिद समस्तसुखद न ज्ञायते किं फल ॥२॥
जननि भारति सज्जिनतुण्डजे सुसति लोकलतावन(?)तत्परे।
भव सरस्वति मे 'कलुषापहा तव पदांबुजभक्तियुजः सदा ॥३॥
इति श्रीचतुर्विंशतिजिन स्तुति कविजगन्नाथकृता पूर्णा ॥

## ५७. मौनव्रतकथा ( गुणचन्द्र सूरि )

आदिभाग —

सकलज्ञानसंपूर्णान् नत्वा श्रीजिननायकान्।
मौनव्रतकथां वक्ष्ये भव्याना हितसिद्धये ॥१॥

अन्तभाग —

श्रीमूलसंघेऽघविघातिनीह प्रद्योतमानान्यमतानि नेशुः।
सारस्वतोगच्छ इहैव नद्याच्छ्रीमद्बलात्कारगणाभियुक्तः ॥२६॥
श्रीरत्नकीर्तिरभवज्जगतावरेण्यश्चारित्ररत्ननिवहस्य बभार भारं।
तद्दीक्षितो यतिवरः कृतिदेवकीर्तिः चारित्ररजितजनोद्गहितासुकीर्तिः॥२७
तदग्रशि(तच्छि)ष्यो गुणचन्द्रसूरिरभवच्चारित्रचेतोहर-
स्तेनेय रचिता कथा व्रतवता पुण्याकुरोत्पादिका।
श्रीमत्पचमतीर्थचैत्यसदने सद्वागलेन्द्रगके(?)
श्रीमौनव्रतसत्फलार्थकथका नन्दत्वियं भूतले ॥२८॥
इति मौनव्रतकथा समाप्ता।

## ५८. पट्टचतुर्थ-वर्त्तमान-जिनार्चन ( प० शिवाभिराम )

आदिभाग :—

अथ षट्टचतुर्थवर्तमानजिनार्चन समुदीरयामः ।

यशः समानदति विष्टपत्रयं यदुग्रतेजः प्रसरत्प्रभाभिर ।
नरेडिव प्रस्खलिताहितद्युतेर्जिनेशिनस्तं हृदयेऽनिश दधे ॥१॥

अन्तभाग —

अभवदजित्तविद्यो मन्मथारातिभक्तो नृपनिकरशिरोरुमौलिरत्नप्रभार्च्यः ।
पुषदवनिपसूनुर्यः शिवारामनाम्ना व्यरचि जिनवरार्चावृत्तरत्नप्रभार्कैः॥११॥
परमसुखविचित्र शुद्धसद्भावजात गुणगणितविनाश कर्मकातारदाव ।
विभय-विभवसार शुद्धजीवावतार जिनवरपदभक्तेर्यातु भक्त्यास्पदं भोः ॥१२॥
भवतु विभवभूरिर्मुक्तिकातार्चकाना भवतु विभवभूरिस्तद्व्रतानदिताना ।
भवतु विभवभूरिः सद्गुरूणा जनाना भवतु विभवभूरिः सर्वजीवात्मकाना॥१३॥
विशदविजयसारमालवाख्याख्ययाख्ये दिविजनगरदुर्गे भाति देवालयो वा
जिनवर-पद-भक्तिर्विद्यते यज्जनाना न तु कुमतकुवृत्तिर्ग्रंथपंथात्मकाना ॥१४॥
अरिकुलवनदाहो यत्र सामतसेनः स्वकुलगतसुवृत्तिस्कंधसालत्वभूतः ।
हरितनुजतनूजो वानुरुद्धः पृथिव्यामिव कविकुलपालो राज्यरामा बभार॥१५
तदखिलवरराज्यप्राज्यसाहाय्यसाने रघुपतिरिति नामाभून्महेज्यो महात्मा ।
तदखिलकुलभूपस्तत्सुतो धन्यराजो मम परमसुभक्तो सोत्र साहाय्यकोभूत्॥१६॥
रहितविभवभूषास्त्यक्तदारस्वदेशा जिनवरपदभक्तिमात्रसम्यग्धनाढ्याः ।
शिवगतजिनभूमेर्वंदनासक्तचित्ताः सुचिरतरविहारं कुर्महे धर्मसिद्धयै ॥१७॥
नवशि(?)च नयनाख्ये कर्मयुक्तेन चंद्रे गतिवति सति जतौ विक्रमस्यैव काले ।
निपतदतितुषारे माघचंद्रावतारे जिनवरपदचर्चासिद्धये संप्रसिद्धा ॥१८॥

गुणभद्रभदतोक्त्या स्वयसिद्धाक्षरै· · ·कैः ।
जातेय वीतरागार्चा नमस्कर्तव्यमत्र वै ॥१९॥

यावत्सज्जनचित्तनिश्चलधरा यावज्जलश्रीधरा
यावच्चक्रधरा सुरेश्वरधरा पातालपाताधरा ।
यावच्चन्द्रदिवाकरपृथुधरा यावच्च धर्मस्थिति-
स्तावच्छ्रीजिनराजचद्रचरणपूजा समानदतु ॥२०॥

शिवाभिरामाय शिवाभिरामं शिवाभिरामात्र शिवाभिरामैः ।
शिवाभिरामप्रदक भज त्व मुहुर्मुहुर्भो वद किं वदामि ॥२१॥

इति श्रीषट्चतुर्थवर्तमानजिनार्चा शिवाभिरामावनिप्रसूनुकृताऽद्भुततर्स्य्फ समाप्ता ।

## ५६. पार्श्वपुराण ( भ० चन्द्रकीर्ति )

**आदिभाग :—**

मुक्तिस्त्रीहृदयाश्लिष्टं केवलश्रीविभूषणं ।
श्रीसर्वज्ञमहं वन्दे प्राप्तानंतचतुष्टयम् ॥१॥

× × ×

स जीयाद्रामसेनाख्यः काष्ठांवरनभोंशुमान् ।
भट्टारकः सदाश्रेष्टः शब्दशास्त्राब्धिपारगः ॥३०॥
महापुराणसत्काव्य-कीर्तनान्निर्मितं यशः ।
भूतले यस्य जीयात्स जिनसेनो यतीश्वरः ॥३१॥
यदुत्तरपुराणस्य कर्ता नैयायिकः सुधीः ।
सूरिः श्रीगुणभद्राख्यो भू(जी)याद्भूमंडले कविः ॥३२॥

**अन्तभाग :—**

स्वस्ति श्रीमति काष्ठसंघतिलके गच्छे सुनन्दीतटे
वादीन्द्रोरुसुपण्डितेन्द्रकविसच्चन्द्रावलीभूषिते ।
आसीदन्वयमण्डितो गुणनिधिर्विद्यागणाधीश्वरः
सूरिः श्रीयुतरामसेन इह वै विद्यानवद्यः सदा ॥६५॥

यस्मिन्निवासं विदधे प्रसिद्धा स्याद्वादविद्या सततं मनोज्ञा।
वृत्तं प्रवृत्तं विशदं च यत्र विजृंभते तस्य कथं न कीर्तिः ॥६६॥
तदन्वयेऽभूत्किल धर्मसेनः सूरिस्तपोभूषितधर्मसेनः।
नमत्पदाम्भोजसुरेन्द्रसेनः स्याद्वादविनिर्जित्तवादिसेनः ॥६७॥
विशदपाद[सु]पंकजभास्करः सकलशास्त्रसुपीतरसोत्करः।
अखिलसूरिवरस्तपसा निधिर्विमलसेनमुनिः समभूत्सुधीः॥६८॥
तत्पट्टपूर्वाचलचण्डरोचिः सूरीश्वरोऽभूत्सुविशालकीर्तिः।
यद्देशनाकर्णनतः प्रहृष्टा बुधा न मुह्यन्ति सुधारसेऽपि ॥६९॥
तत्पट्टवारानिधिशीतरोचिर्भट्टारकोऽभूत्किल दिव्यरोचिः।
बभूव गच्छेश्वरविश्वसेनः स्वदेशनार्रजितसद्गसेनः ॥७०॥
काष्ठासंघे गच्छनन्दीतटीयः श्रीमद्विद्याभूषणाख्यश्च सूरिः।
आसीत्पट्टे तस्य कामान्तकारी विद्यापात्रं दिव्यचारित्रधारी ॥७१॥
तत्पट्टाम्बरभूषणैकतरणिः स्याद्वादविद्यान्विणो(?)
विद्वद्वृन्दकुलाभिमानशिखरीप्रध्वंसतीव्राशनिः।
सच्चारित्रतपोनिधिर्मतिवरो विद्वत्सु शिष्यैर्युतः।
श्रीश्रीभूषणसूरिराट् विजयते श्रीकाष्ठसंघाग्रणीः ॥७२॥
यदग्रतो नैति गुरुर्गुरुत्वं श्लाघ्यं न गच्छत्युशनोऽपि बुद्ध्या।
भारत्यपि नैति माहात्म्यमुग्र श्रीभूषणः सूरिवरः स पायात् ॥७३॥
वाणी यस्योत्कृष्टपीयूषजेत्री रूपं यस्यानन्तसौन्दर्यहारी।
धत्ते वृत्ताद्यो गणे शोभमान श्रीश्रीभूषाख्यश्च सूरिः स जीयात् ॥७४॥
तस्य श्रीजयवच्छिष्यो जाड्यपात्रं समस्यल(?)।
आचार्यश्रीचन्द्रकीर्त्याख्यो रोलम्बोऽर्हत्पदाम्बुजे ॥७५॥
श्रीपार्श्वनाथस्य पुराणमुत्तमं सन्तोषकृत्तेन सता तदुत्तमम्।
विनिर्मितं भाववतो न भूरिणा श्रीचन्द्रकीर्त्याख्यकवीन्द्रसूरिणा ॥
भूरिशास्त्रनिपुणा विमत्सराः शोधयन्तु सुधियश्च सन्नराः।
कूटमत्र भणितं च यन्मया पार्श्वनाथसुपुराणसागरे ॥७७॥

× × × ×

श्रीमद्देवगिरौ मनोहरपुरे श्रीपार्श्वनाथालये
वर्षेऽधीषुरसैकमेय(१६५४) इह वै श्रीविक्रमार्केस(श्व)रे।
सप्तम्यां गुरुवासरे श्रवणभे वैशाखमासे सिते
पार्श्वाधीशपुराणमुत्तममिदं पर्याप्तमेवोत्तरम्॥
यावद्धरामेरुकुलाचलेन्द्रमन्दाकिनीमुख्यपदार्थवर्गाः।
तिष्ठतु तावत्परम पुराणं नन्द्यादिद पार्श्वजिनेश्वरस्य॥
द्वेसहस्रे तथा सप्तशतीपंचदशोत्तरे(२७१५)।
अस्यैव ग्रन्थराजस्य मानमुक्त कवीशिनः॥

इति श्रीत्रिजगदेकचूडामणिश्रीपार्श्वनाथपुराणे श्रीचन्द्रकीर्त्याचार्य-प्रणीते भगवन्निर्वाणकल्याणकव्यावर्णनो नाम पचदशः सर्गः।

समाप्तश्चायं ग्रन्थः।

## ६०. छन्दोनुशासन (जयकीर्ति)

आदिभाग :—

श्रीवर्धमानमानम्य छन्दसां पूर्वमक्षरं।
लक्ष्यलक्षणमावीक्ष्य वक्ष्ये छन्दोनुशासनं॥१॥
छन्दःशास्त्र वहित्रं तद्विवक्षो काव्यसागरं।
छन्दो भाग्याश्रय सर्वं न किंचिच्छन्दसो विना॥२॥

अन्तभाग :—

माण्डव्य-पिंगल-जनाश्रय-सेतवाख्य-
श्रीपूज्यपाद-जयदेव-बुधादिकानाम्।
छन्दांसि वीक्ष्य विविधानपि सत्प्रयोगान्
छन्दोऽनुशासनमिदं जयकीर्तिनोक्तं॥

इति जयकीर्तिकृतौ छन्दोनुशासन ········ सम्वत् ११९२ असोढ-सुदि १० शनौ लिखितमिदमिति। [ जैसलमेर प्रति

## ६१. प्रद्युम्नचरित (महासेन सूरि)

**आदिभाग :—**

श्रीमन्तमानम्य जिनेन्द्रनेमि ध्यानाग्निदग्धाखिलघातिकक्षम् ।
व्यापारयामास न यत्र बाणान् जगद्विजेता मकरध्वजोऽपि ॥१॥
बाल्येपि यस्याप्रतिम सुरेन्द्रो विलोक्य रूपं पुनरीक्षते स्म ।
चक्षुः सहस्रं युगपद्विधाय नत्वा च तं वीरजिनं विरागम् ॥२॥
जिनेन्द्रवक्त्राम्बुजराजहंसीं प्रणम्य शुक्लामथ भारतीं च ।
उपेन्द्रसूनोश्चरितं प्रवक्ष्ये यथागमं पावनमात्मशक्त्या ॥३॥
कवीन्द्र-सीमानमितैर्यदुक्तं गणेश्वराद्यैरपि विस्तरेण ।
तत्पादपद्मद्वयभक्तिशक्त्या संक्षिप्य तद्वक्तुमय श्रमो नः ॥४॥

**अन्तभाग :—**

श्रीलाटवर्गटनभस्तलपूर्णचन्द्रः शास्त्रार्णवान्तगसुधीस्तपसा निवासः ।
काता(कतो:) कलावपि न यस्य शरैर्विभिन्नं स्वान्तं बभूव स मुनिर्जयसेननामा॥
तीर्णागमाम्बुधिरजायत तस्य शिष्यः श्रीमद्गुणाकर-गुणाकरसेनसूरिः ।
यो वृत्त-बोध-तपसा यशसा च नूनं प्रापत्परामनुपमामुपमां मुनीना ॥२॥

तच्छिष्यो विदिताखिलोरुसमयो वादी च वाग्मी कविः
शब्दब्रह्म विचित्रधामयशसा मान्या सतामग्रणीः ।
आसीत् श्रीमहसेनसूरिरनघः श्रीमुंजराजार्चितः
सीमा दर्शनबोधवृत्ततपसा भव्याब्जनी-बाधवः ॥३॥
श्रीसिन्धुराजस्य महत्तमेन श्रीपर्पटेनार्चितपादपद्मः ।
चकार तेनाभिहितः प्रबन्धं स पावनं निष्ठितमङ्गजस्य ॥४॥

श्रीमत्कामममहानरस्य चरितं संसारविच्छेदनः
श्रद्धाभक्तिपराः प्रबुद्धमनसाः शृण्वन्ति ये सत्तमाः ।
संवेगात्कथयन्ति ये प्रतिदिनं योऽधीयते सततं
भूयासुः सकलास्त्रिलोकमहिताः श्रीवल्लभेन्दुश्रियः ॥५॥

श्रीभूपतेरनुचरो मघनो विवेकी श्रृङ्गारभावघनसागररागसारं ।
काव्यं विचित्रपरमाद्भुतवर्ण-गुम्फ सलेख्य कोविदजनाय ददौ सुवृत्तं ॥६॥
श्रे० माणिक्येन लिखितं । स० १५६६ वर्षे फाल्गुणसुदि ६ गुरौ ।
[ कारंजा प्रति

## ६२. त्रिपंचाशत्क्रियाव्रतोद्यापन ( भ० देवेन्द्रकीर्ति )

आदिभाग :—

श्रीदेवेन्द्रफणीन्द्रवृन्दविनुतं नत्वा जिनं सन्मतिं
हारासारतुषारगौरतनुभा श्रीशारदा शारदाम् ।
वंदित्वा गुणधारिणो मुनिगणान् श्रीगौतमादीन् ब्रुवे
त्रिपंचाशदभिक्रियाव्रतविशिष्टोद्यापनार्चाविधिः ॥१॥
चन्द्रोपकैः शोभितपुष्पमालाजाल लसत्तोरणमुत्पताकं ।
यो वारकाद्यैः सहित हिताय विधाय जैनालयमडपं सत् ॥२॥
पूजोपचार प्रचुर पवित्र पवित्रचित्तः श्रितनीतिवित्तः ।
लात्वा गृही वाऽथ महोत्सवेन भव्यैर्युतश्चैत्यगृहं समेति ॥३॥
× × × ×
साहं बीजपयोजमध्यममलं कृत्वा शुभ मडलं ।
त्रिःपंचाशदभीष्टकोष्टकयुत सत्पंचवर्णैर्वरैः ॥
चूर्णैः रत्नभवै रर(?) कमलसच्छुभ्रवासो युगैः
सुस्नातार्चितभूप्रितैर्जिनमहः प्रारभ्यते पंडितै ।

अन्तभाग :—

भव्याऽग्रवालसुकुलोत्पलपूर्णचन्द्र-श्रीराजमान्य-सुमहत्तरनाथनाम्नः ।
श्राद्धक्रियामहविधिः सदनुग्रहेण देवेन्द्रनामकविना विहितः श्रियैः स्यात् ॥
पद्मावद्धरणीधराढ्यविभवः श्रीविक्रम-स्वीकृतः ।
आजत्सम्भवविप्रराजविबुधो देवेन्द्रपूज्यस्य(श्र)यः ॥

त्रि:पंचाशदभिक्रियाव्रतविधि: पूजाक्रमोऽसौ चतु-
श्चत्वारिंशादिशेव(?)षोडशशतेऽब्दे(१६४४) निर्मितो नन्दतु ॥५॥

× × × ×

जिनाभिषेकस्य विधि विहाय प्रपठ्य शान्त्यै किल शान्तिपाठं।
विसर्ज पुष्पाक्षतकैस्तदीशान् प्रपूज्य संघ सुखमेधता सः ॥

इति त्रिपंचाशत् क्रियाव्रतोद्यापनं समाप्तं।

## ६३. वृहत्षोडशकारणपूजा ( सुमतिसागर )

**आदिभाग :—**

अनन्तसौख्य सुपदं विशाल परंगुणोयं(णौघं ?)जिनदेवसेव्यं।
अनादिकालप्रभवं व्रतेशं त्रिधाह्वये षोडशकारणं वै ॥१॥

**अन्तभाग :—**

अवन्तिकानामसुदेशमध्ये विशालशालेन विभाति भूतले।
सुशान्तिनाथोऽस्तु जयोऽस्तु नित्यमुज्जेनिकाया परदेव तत्र(?) ॥१॥
श्रीमूलसंघे विपुलेऽथ दूरे(?)ब्रह्मामगच्छे बलत्शांतिने गणे।
तत्राऽस्ति यो गौतमनामधेयान्वये प्रशान्तो जिनचन्द्रसूरिः ॥२॥
श्रीपद्मनन्दिर्भवतापहारी देवेन्द्रकीर्ति ............... ।
विद्यादिनदिर्वरमल्लिभूषो लक्ष्मादिचन्द्रोऽभयचन्द्रदेवः ॥३॥
तत्पट्टेऽभयनन्दीशो रत्नकीर्तिगुणाग्रणीः ।
जीयाद्भट्टारके लोके रत्नकीर्तिर्जगोत्तमः ॥४॥
सुमतिसागरो देवश्चक्रे पूजामघापहा ।
खण्डेलवालान्वये सेयः प्रल्हादोल्हादवान् सुधीः ॥५॥
कर्त्तोपरोधपूजाय (?) मूलसंघविदाग्रणीः ।
सुमतिसागर देवं श्रद्धाक षोडशकारणं ॥६॥

इति श्रीषोडशकारणोद्यापनपूजा समाप्ता।

## ६४. पंचकल्याणकोद्यापनविधि (ब्र० गोपाल)

आदिभाग :—

श्रीवीरनाथं प्रणिपत्य मूर्ध्ना वक्ष्ये जिनानां भुवि पंचकं च।
कल्याणकाना ............................................. ॥

अन्तभाग —

श्रीहेमचन्द्रसुगुरोः परमप्रसादात्सारा स्तुतिः सकललोकमनोमेय(हरेयं?)।
नंद्यादतूरपि(?)च कौचचिरं जिनाना (?) एकातमासगणनाविधिरत्र मुख्य ॥१॥

गोपालवर्णिनाकारीषुकल्याणकवर्णनं।
यदि शुद्धमशुद्धं वा शोधयतु बहुश्रुताः ॥२॥

इति श्रीब्रह्मभीमाग्रहाद्ब्रह्मगोपालकृत-श्रीचतुर्विंशतिजिनपंचकल्याणक समुच्चयोद्यापनविधिरय संपूर्णः ॥

## ६५. सिद्धचक्र-कथा (शुभचन्द्र)

आदिभाग :—

प्रणम्य परमात्मानं जगदानन्ददायकं।
सिद्धचक्रकथां वक्ष्ये भव्यानां शुभहेतवे ॥१॥

अन्तभाग :—

श्रीपद्मनंदीमुनिराजपट्टे शुभोपदेशी शुभचन्द्रदेवः।
श्रीसिद्धचक्रस्य कथाऽवतारं चकार भव्याबुजभानुमाली ॥१॥
सम्यग्दृष्टिविशुद्धात्मा जिनधर्मे च वत्सलः।
जालाकः कारयामास कथा कल्याणकारिणीं ॥२॥

## ६६. अंजनापवनंजय-नाटक ( कवि हस्तिमल्ल )

आदिभाग :—

आदौ यस्य पुरश्चराचरगुरोरारब्धसंगीतक-
श्चक्रे नाट्यरसान् क्रमादभिनयन्नाखडलस्ताडव ।
यस्मादाविरभूदचिन्त्यमहिमा वागीश्वराद्भारती
स श्रीमान् मुनिसुव्रतो दिशतु वः श्रेयः पुराण' कविः ॥१॥

नान्द्यते सूत्रधारः । अलमतिप्रसगेन मारिष । इतस्तावत्प्रविश्य पारिपार्श्वकः । भाव अयम् । सूत्रधारः—आज्ञापितोऽस्मि परिषदा । यथा । अद्य त्वया तत्र भवतः सरस्वतीस्वयवृतपतेर्भट्टारगोविन्दस्वामिनः सूनुना,श्रीकुमार-सत्यवाक्य-देवरवल्लभोदयभूषणानामार्यमिश्राणामनुजेन कवेर्वर्धमानस्याग्रजेन कविना हस्तिमल्लेन विरचित विद्याधरनिबंधन-ांजनापवनंजयनामनाटकं यथावत्प्रयोगेन नाटयितव्यमिति ।

अन्तभाग :—

श्रीमत्पांड्यमहीश्वरे निजभुजादडावलम्बीकृते ।
कर्णा[टा]वनिमंडल पदनतानेकावनीसेवति(?) ।
तत्प्रीत्यानुसरन् स्वबन्धुनिवहैर्विद्वद्भिराप्तैः सम ।
जैनागारसमेत' ' 'गमे श्रीहस्तिमल्लो वसन् ॥ निष्क्रान्ताः सर्वे ।

इति श्रीगोविन्दभट्टारस्वामिनः सूनुना श्रीकुमार-सत्यवाक्य-देवरवल्लभोदय-भूषणानामार्यमिश्राणामनुजेन कवेर्वर्धमानस्याग्रजेन कविना हस्तिमल्लेन विरचिते अंजनापवनंजयंनामनाटके सप्तमोऽङ्कः । समाप्तं चेदमंजनापवनंजयं नाम नाटकं । कृतिरियं हस्तिमल्लस्य ।

## ६७. शृङ्गारमंजरी ( अजितसेनाचार्य )

आदिभाग :—

श्रीमदादीश्वर नत्वा सोमवंशभवार्थितः ।
रायाख्य-जैनभूपने(पार्थ?) वक्ष्ये शृङ्गारमंजरीम् ॥१॥

अष्टाविंशं शतं तस्याः प्रमाणं श्लोकपद्यतः ।
अनुष्टुप्सख्यया पंचचत्वारिंश शतं मत ॥२॥
'विदोष सगुण रीतिरसालकारग मुदे ।
काव्य कुर्वीत शब्दार्थरचनानिपुणः कविः ॥३॥
× × × ×

अन्तभाग :—

राज्ञी विट्ठलदेवीति ख्याता शीलविभूषणा ।
तत्पुत्र. कामिरायाख्यो 'राय' इत्येव विश्रुतः ॥४६॥
तद्भूमिपालपाठार्थमुदितेयमल-क्रिया ।
सक्षेपेण बुधैर्ह्येषा यद्यत्रास्ति(?) विशोध्यताम् ॥४७॥

इति श्रीमदजितसेनाचार्य-विरचिते शृङ्गारमजरीनामालकारे तृतीयः परिच्छेदः ॥

( दूसरी प्रतिमें [१] ) श्रीसेनगणाग्रगण्यतपोलक्ष्मीविराजिताजितसेनदेव-यतीश्वरविरचितः शृङ्गारमंजरी नामालकारोऽयम् ॥

## ६८. शङ्खदेवाष्टक ( भानुकीर्ति )

आदिभाग :—

शतमखशतवन्द्यो मोक्षकान्ताभिनन्द्यो
दलितमदनचापः प्राप्तकैवल्यरूपः ।
कुमतवनकुठारः शङ्खरत्नावतारः
त्रिभुवननुतदेवः पातु मा शङ्खदेव. ॥१॥

अन्तभाग :—

जिनपदकमलालिर्जैनभूतेपि कालि-
र्मुनिपतिमुनिचन्द्र' शिष्यराजेन्द्रचन्द्रः ।

---

१ दोनों प्रति ऐ०प० सरस्वतीभवन बम्बईमें हैं। अगस्त सन् १६२८ में उन्हीं परसे यह प्रशस्ति ली गई थी।

सफलविमलसूक्तिर्भानुकीर्तिप्रयुक्ति-
स्त्रिभुवननुतदेवः पातु मा शङ्कदेवः ॥८॥

## ६६. तत्वार्थसूत्र-सुखबोधवृत्ति ( भ० योगदेव )

**आदिभाग :—**

विनष्टसर्वकर्माणं मोक्षमार्गोपदेशकं ।
तद्गुणोद्भूतिलाभाय सर्वज्ञ जगतो गुरु ॥१॥
आलंबनं भवाभोधौ पतता प्राणिना पर ।
प्रणिपत्य महावीरं लब्धानंतचतुष्टयं ॥२॥
सक्षेपितागमन्यासा मुग्धबुद्धिप्रबोधिका ।
सुखबोधाभिधा वक्ष्ये वृत्ति तत्त्वार्थगोचरा ॥३॥

**पादपूज्य(पूज्यपाद)विद्यानन्दाभ्या** यद्वृत्तिद्वयमुक्त तत्केवलं "तर्कागमयोः पाठकैरबलाबालादिभिर्ज्ञातु न शक्यते ततः सस्कृतप्राकृतपाठकानां सुखज्ञानकारणवृत्तिरियमभिधीयते ।

( इसके बाद **'मोक्षमार्गस्य नेतार'** इत्यादि मगल पद्य देकर उसकी व्याख्या की है और उसे सूत्रकारकृत सूचित किया है । )

**अन्तभाग :—**

शुद्धेद्धतपःप्रभावपवित्रपादपद्मरजः किंजल्कपुजस्य मनःकोणैकदेशक्रोडीकृताऽखिलशास्त्रार्थाम्बरस्य पंडितश्रीबन्धुदेवस्य गुणप्रबन्धोऽनुस्मरणाज्जातानुग्रहेण प्रमाणनयनिर्णीताखिलपदार्थप्रपंचेन श्रीमद्भुजबल-**भीमभूपाल**-मार्तंडसभायामनेकधालब्धतर्क्क-चक्राकत्वेनाबलाब(बा)लादीनामात्मनश्चोपकारार्थे न पाडित्यमदविलासात्सुखबोधाऽभिधा वृत्ति कृता महा-**भट्टारकेण कुम्भनगरवास्तव्येन** पडितश्री**योगदेवेन** प्रकटयतु संशोध्य बुधा यदत्रायुक्तमुक्तं किंचिन्मतिविभ्रमसभवादिति ॥

[इति] श्रीप्रचडपंडितमडली-मौनव्रतदीक्षागुरोर्योगदेवविदुषः कृतौ सुखबोधाभिधानतत्वार्थवृत्तौ दशमोऽध्यायः समाप्तः ।

## ७०. विषापहार-टीका ( नागचन्द्रसूरि )

आदिभाग :—

वंदित्वा सद्गुरून् पचज्ञानभूषणहेतवः ।
व्याख्या विषापहारस्य नागचन्द्रेण कथ्यते ।।१।।

अथात· स्याद्वादविद्यापूर्वकुत्कीलकोटीकिरणमालिना गृहस्थाचार्यकुजरेण धनजयसूरिणा सामायिकमनुतिष्ठता तदानीमेव स्वकीयपुत्रस्य सर्पदष्टत्वमाकर्ण्यापि ततोऽचलता भगवद्गुणग्रामदत्तचित्तेनाचालमेव स्तुवता कृतस्य स्तवस्य प्रभावनिःकाशिततद्गतविषनिपेकोद्रेकस्य तत एव विषापहार इति व्यपदेशभाजोऽतिगहनगभीरस्य सुखावबोधार्थं वागड्देशमडलाचार्यज्ञानभूषणदेवैर्मुहुर्मुहुरुपरुद्ध' कार्णाटादिराजसभे प्रसिद्धः प्रवादिगजकेशरीविरुदकविमदविदारी सद्दर्शनज्ञानधारी नागचद्रसूरिर्धनजयसूर्यभिहितार्थं व्यक्तीकर्त्तुमशक्नुवन्नपि गुरूवचनमलघनीयमिति न्यायेन तदभिप्रायं विवरीतु प्रतिजानीते ।

अन्तभाग —

इयमर्हन्मतक्षीरपारावारपार्वणशशाकस्य मूलसघदेशीगणपुस्तकगच्छ-पनशोकावलीतिलकालंकारस्य तौलवदेशविदेश-पवित्रीकरणप्रवण-श्रीमल्ललितकीर्तिभट्टारकस्याग्रशिष्य - गुणवद्गणपोषण-सकलशास्त्राध्ययन-प्रतिष्ठायात्राद्युपदेशानूनधर्मप्रभावनाधुरीण- देवचद्रमुनीन्द्रचरणनखकिरण-चंद्रिकाचकोरायमाणेन कर्णाय ( १ ) विप्रकुलोत्तस-श्रीवत्सगोत्रपवित्रपार्श्वनाथगुमटाम्बातनूजेन प्रवादिगजकेशरिणा नागचद्रसूरिणा विषापहार-स्तोत्रस्य कृतव्याख्या कल्पान्तं तत्त्वबोधायेति भद्रम् ।

इति विषापहारस्तोत्र-टीका समाप्ताः ।

## ७१. पाण्डवपुराण ( श्रीभूषणकृत )

आदिभाग :—

प्रणम्य श्रीजिन देव सर्वज्ञ सभवं शिव ।
कुर्वे हि पाण्डवाना हि चरित्रं चित्तरंजनम् ।।१।।

(प्रथम पद्यके बाद वृषभ, चंद्रनाथ, शान्ति, नेमि और महावीर भगवानकी स्तुति करके तदन्तर ब्राह्मीवाणी, गौतमगणधर, युधिष्ठिर, भीम, अर्जुन, नकुल और सहदेवकी स्तुति की गई है।)

भद्रबाहुर्मुनिर्जीयात् महाज्ञानी महादमी।
येन कृत्स्न श्रुतं ज्ञातं पचमो श्रुतकेवली ॥१२॥
विशाखाचार्यो मा पातु विशाखा भूतलेऽखिले।
अद्यापि वर्तते शुद्धा देवेन्द्रैरपि संस्तुतः ॥१३॥
स जीयाद्रामसेनोऽपि प्रतिबोधनपडितः।
दिग्वासा शुद्धचेतस्को निमित्तज्ञानभास्कर. ॥१४॥
समंतभद्रो भद्रार्थो भानुभाभारभूषितः।
येन देवागमस्तोत्रं कृतं व्यक्तमिहावनौ ॥१५॥
अमित्यादिगतिर्येष्टः(?) शब्दव्याकरणार्णवः।
पुनातु पावनामूर्तिर्यस्य सवर्तते क्षितौ ॥१६॥
अकलंकश्चिर जीयादकलंकोऽवनिश्रुतः।
पादेन ताडिता येन मायादेवी घटस्थिता ॥१७॥
त्रिषष्टिपुरुषाणा वै पुराणं येन निर्मितम्।
स जीयाज्जिनसेनश्च सदेहध्वातभास्कर. ॥१८॥
गुणादिभद्रपर्यंता सूरयो भातु भूतले।
पुराणपूर्णसन्मार्गदर्शका रवयो यथा ॥१९॥
त पुराण समालोक्य गौणभद्रं विशारद।
पुराण पाडवाना हि ब्रुवे सूत्रानुसारतः ॥२०॥
नेमिसेनश्चिर जीयाद्वियच्चारिः भवेद्बलात्।
पद्मावत्यपरं तीर्थमकरोच्चारणर्द्धिवत् ॥२१॥
रत्नकीर्तिः भवेद्रत्नरोहणाचलवत् सदा।
बाल्येपि येन निष्काममकामोपि कृतवान्मुनिः ॥२२॥
अन्वर्थो धर्मसेनोऽभूद्धर्मसेनो गुणाग्रणीः।

वैराग्यरसवारीशो दिक्चेलो दमसयुत ॥२३॥
विमलसेनको सूरिः रविरिव विराजते ।
नानावस्तुकदंबानां द्योतको भुवनोदरे ॥२४॥
विश्वसेनमुनिर्जीयाद्विशालः सर्वकीर्तिक ।
स्वन्यायचक्रचक्रेण जितं येनारिमंडलम् ॥२५॥
भाति भूवलये भूरिशोभाभरविभूषितः ।
विद्याभूषणसूरीन्द्रो ग्रथाना ग्रंथने क्षमः ॥२६॥
ग्रथार्णवसुगभीरः क्वाऽत्र मे बुद्धिलाघवी ।
अतोऽह साहस मेने सर्वेषा हास्यदायकम् ॥२७॥
बहव कवयोऽभूवन् जिनसेनादिका वराः ।
तत्पदाभोजनमनात्करिष्ये तत्पुराणकम् ॥२८॥
विवक्षन् हास्यता याति यथा मूको तथाप्यह ।
हास्यस्य भाजनं शास्त्र विवित्सुर्ज्ञानलेशतः ॥२९॥
पगुर्जिगमिषुर्मेरुमस्तकं निखिलैर्जनै ।
विहस्यतेऽप्यहं शास्त्र चिकीर्षुरजसा तथा ॥३०॥
शास्त्र कर्तुमशक्तोह यद्यपि सादरो यतः ।
मदा धेनुर्यथा वत्स रक्षति क्षीरदानतः ॥३१॥
पूर्वाचार्यकृते ग्रन्थे मार्गस्दर्शनाल्लघु ।
क्रियते पावन शास्त्रं मया स्वज्ञानशुद्धये ॥३२॥
सूर्यप्रकाशितो मार्गः दीप. किं न प्रकाशयेत् ।
पूर्वाचार्यै कृतो ग्रथो मया किं न करिष्यते ॥३३॥
× × × ×

( आगे दुर्जनादिका तथा कथा, वक्ता, श्रोताका स्वरूप वर्णित है ।)

अन्तभाग —

छदास्यलंकारगणान्न वेद्मि अनेकशास्त्राणि विवेकजानि ।
जैनेन्द्रमुख्यानि सुलक्षणानि काव्यानि न्यायानि प्रबोधकानि ॥६३॥

गोमट्टसाराणि महार्णवानि त्रैलोक्यसाराणि सुतर्ककाणि ।
नो विद्मयह चाष्टसहस्त्रकानि नानाप्रकाशोद्गमकानि सद्मः ॥६४॥
ईदृग्विधोऽहं सततं विबुध्य भोः साधुवर्गाः प्रविमुच्य कोप ।
विशोध्यता मे कृतिमेव बुध्या बाले जने को हि हितं न कुर्यात् ॥६५॥
काष्ठासंघाञ्हगच्छे जगति सुविदितः सारनदीतटांको
धर्माधारोऽस्ति शस्तो मुनिगणसहितस्तत्र विद्यागणोऽपि ।
पूज्याः श्रीरामसेना गुरव इह बभूवुः पुरा पौरमान्याः
शाब्दातोक्तोपपत्या चरणमनुपमं ये चरते शरण्याः ॥६६॥
वशे तेषा प्रशस्येऽजनिषत् गुरवो धर्मसेनाभिधाना-
स्तत्पट्टे लब्धवर्णाः सुविमलपदतः सेनसज्ञाः मुनींद्राः ।
सूरीशास्तत्पदेपि प्रचुरगुणयुताः श्रीविशालास्सुकीर्ति-
सज्ञा विज्ञातशास्त्रास्तृणमणिसुजनाऽमित्रतुल्यस्वभावा ॥६७॥
तेषा पट्टे सुदक्षाः मुनिजनमहिता विश्वसेनाभिधानाः
सूरेदा वै वितद्रा स्व(त ?)रणिसममहोद्योतिताशा बभूवुः ।
सूरिस्तेषा हि पट्टे सकलगुणगणाः प्रौढविद्याविभूषाः ॥६८॥
जीयात्तेषा हि पट्टे सकलगुणनिधिश्चारुचारित्रभूषः
श्रीमच्छ्रीभूषणाख्यो विबुधजननुतो जैनतत्वार्थवेदी ।
ज्ञाता दाता सुवक्ता परम[न]सकलान् वेत्ति विज्ञानदक्षः
तत्त्वातत्त्वप्रणेता विमलतरगुणश्चारुचारित्रयुक्तः ॥६९॥
शृण्वति ये भावधिया पठति चारित्रमेव प्रवर विशालं ।
लिख्यापर्यत्यादरतो नितात भजति ते सौख्यपरंपरा च ॥१००॥

( आगे दो पद्योंमें आशीर्वाद है । )

विद्याविभूषोत्तमपट्टधारी शास्त्रस्य वेत्ता वरदिव्यवाणी ।
जीयात्पृथिव्या जिनधर्मदाता श्रीभूषणोऽसौ यतिराट् नितातं ॥१०३॥
कृत चरित्रं शुभपाडवाना भटोत्तमाना प्रवरं सुपुण्यं ।
सुश्यादिभूषेण विशुद्धबोधात् पुरातनं वीक्ष्य पुराणमेव ॥१०४॥

श्रीगूर्जरे सौर्यपुरे विशाले वर्णाश्रये वर्णविवर्णनीये।
इदं चरित्रं कृतमेव भक्त्या श्रीचंद्रनाथालयमाशुलभ्या(?) ॥१०५॥

काष्ठासंघमहाल्लोके भाति भूवलये सदा।
श्रीनदीतटनामांको विद्यागणगुणाबुधि: ॥१०६॥

तद्गच्छे रामसेनोभून्नेमिसेनो महामुनिः।
तथा श्रीलक्ष्मसेनश्च धर्मसेनो महायति ॥१०७॥

विमलसेनसूरिश्च विशालकीर्तिः कीर्तिभृत्।
विश्वसेनसूरींद्रोभूद्विद्याभूषणनामभाक् ॥१०८॥

तत्पट्टवोधने भानु: श्रीभूषणसूरीश्वर:।
जीयाज्जैनरतो धीमान् चारित्राचरणे रत ॥१०९॥

श्रीविक्रमार्कसमयागतषोडशार्के सत्सुंदराकृतिवरे शुभवत्सरे वै।
वर्षे कृतं सुखकरं सुपुराणमेतत् पंचाशदुत्तरसुसप्तयुते(१६५७) वरेण्ये ॥११०

पौषमासे तथा शुक्ले पक्षे च तृतिया-दिने।
रविवारे शुभे योगे चरितं निर्मितं मया ॥१११॥

अस्य ग्रथस्य विज्ञेया: श्लोका: पिंडीकृतास्तथा।
षट्सहस्रयुता: सर्वे वरा सप्तशतान्विताः (६७००) ॥११२॥

श्लोककाव्यान्यपि सर्वे ज्ञेयानि लेखकैस्तथा।
अत्र भ्रांतिर्न कर्तव्या ग्रन्थाग्रे च विचक्षणैः ॥११३॥

श्रीभूषणेन शुद्धेन निर्मितं चरितं वरं।
पांडवाना सुपुण्याना सदा मांगल्यकारिणाम् ॥११४॥

पांडवाना पुराणं हि नानाशब्दार्थपूरितं।
जगत्यस्मिन् चिरंजीयात् पवित्रं सौख्यकारकं ॥११५॥

इति श्रीपांडवपुराणे भारतनाम्नि भट्टारक-श्रीविद्याभूषण-तत्पट्टाभरण-सूरिश्रीश्रीभूषणविरचिते पांडवोपसर्ग-केवलोत्पत्ति-मुक्तिगमन-सर्वार्थसिद्धिगमन-नेमिनाथमुक्तिगमन वर्णनं नाम पंचविंशतिपर्व ॥

## ७२. अजितपुराण (पं० अरुणमणि)

**आदिभाग :—**

सर्वज्ञाय नमो नित्यं निरावरण-चक्षुषे।
यद्बोधविशदादर्शे भुवनं भु(भ?)वनायते ॥१॥
× × ×
सुभद्रं च यशोभद्रं लोहाचार्यं महामुनिं।
जिनसेनं जितानंगं सर्वसयतसेवितं ॥३०॥
पुराणं गदितं येन त्रिषष्टिपुरुषाश्रितं।
वदेऽहं गुणभद्रं च महागुणगणैर्वृतम् ॥३१॥
सूरिः श्रीश्रुतकीर्त्याख्यः सर्वशास्त्रार्थकोविदः।
तनोतु भवतां भावं भवभ्रमणनाशनम् ॥३२॥
तेषां वाणीं नमाम्युच्चैः त्रैलोक्यार्थप्रदीपिका।
त्रिजगन्मंगलकरी मुनीन्द्रैः सेविता सदा ॥३३॥

**अन्तभाग :—**

श्रीमच्छ्रीकाष्ठसघे मुनिगणनातीतदिग्वस्त्रयु(जु)ष्टे
तस्मिंश्रीमाथुराख्ये वृषभ-नृपयुतं गच्छश्रेष्ठाभिपूज्ये।
तन्मध्ये सर्वश्रेष्ठे परमपदप्रदे पुष्कराख्ये गणे च
लोहाचार्यान्वये च विगतकलुषितसयतानेकज्ञानाः ॥११॥
काष्ठसघगणनायकवीरः धर्मसाधनविधानपटीरः।
राजते सकलमन्मथमेन धर्मसेनगुरुरेष विदेतं ॥१२॥
धर्मोद्धारविधिप्रवीणमनिकः सिद्धांतपारगमी
शीलादिव्रतधारकः शम-दम-क्षान्ति-प्रभा-भासुरः।
वैभारादिकतीर्थराजरचितः प्राज्यप्रतिष्ठोदयः
तत्पट्टाम्बुजविकाशनैकतरणिः श्रीभावसेनो गुरुः ॥१३॥

कर्मग्रंथ-विचारसारसरिणी रत्नत्रयस्याकरः
श्रद्धावधुरलोकलोकनलिनी-नाथोपमः साम्प्रतम् ।
तत्पट्टेऽचलचूलिकासुतरणिः कीर्त्यादिविश्वंभरे
नित्यं भाति सहस्रकीर्तियतिपः ख्यातोऽसि(स्ति) दैगंबरः॥१४॥
श्रीमांस्तस्य सहस्रकीर्तियतिनः पट्टे विकष्टेऽभवत्
त्क्षीणागो गुणकीर्तिसाधुरनघो विद्वज्जनानंदितः ।
मायामानमदादिभूधरपवी राद्धान्तवेदी गणी ।
हेयाहेयविचक्षरचारुधिषणः कामेभकंठीरवः ॥१५॥
जीयाच्छ्रीगुणकीर्तिसाधुरसिकश्चारित्रदृग्ज्ञानभाक्
श्रीमन्माथुरसंघपुष्करशशी निर्मुक्तदंभारवः ।
तत्पट्टे व्रतशीलसंयमनदीनाथो यशःकीर्तिराट्
दुर्दंडैकक्रुदर्पकाममथनो निर्ग्रन्थमुद्राधरः ॥१६॥
निःपापे जिनपादपंकजधरं विष्णुष्टचेतोगृह'(?) ।
शास्त्रारंभसुतुंडताडवकरः स्याद्वादसंप्रेक्षणः ॥१७॥
तत्पट्टे श्रीजिनचंद्रसूरिर्वाणी जिनस्येव बभौ बुधेषु ।
विद्यात्रयी कठविराजमानः तस्य त्रयीरत्नपवित्रगात्रः ॥१८॥
तच्छिष्यजातः श्रुतकीर्तिसाधुः श्रुतेषु सर्वेषु विशालकीर्तिः ।
तपोमयी ज्ञानमयी च कीर्तिर्यस्यर्षिसंघेषु बभौ शशीव ॥१९॥
तच्छिष्यजातो बुधराघवाख्यो गोपाचले कारितजैनधामा ।
तपोधनश्रीश्रुतसर्वकोविदः नरेश्वरैर्वंदितपादपद्मः ॥२०॥
तच्छिष्यज्येष्ठो बुधरत्नपालो द्वितीयकः श्री वनमालिनामा ।
तृतीयकः कान्हरसिंघसंज्ञः तस्यात्मजो लालमणि प्रवीणः ॥२१॥
स्वशक्तिभाजा मणिना सुभक्तिना धियाल्पयोक्ता रविवंशपद्धतिः ।
यदत्र किंचिद्रचितं प्रमादतः परस्परव्याहतिदोषदूषितं ॥२२॥
तदप्रमादास्तु पुराणकोविदा सृजंतु जतुस्थितिशांतिवेदिनः ।
प्रशास्तवंशो रविवंशपर्वतः क मे मतिः काल्पतराल्पशक्तिका ॥२३॥

व्युत्सृष्टापरसंघसंततिबृहच्छ्रीकाष्ठसंघान्वये
संप्रा[प्ता]रुणरत्ननामकविना लाभाय बोधे पुनः।
दृष्टोऽयं रविवंशपुण्यचरितः श्रीपार्वतः सर्वतो
व्याप्ताशामुखमंडलः स्थिरतरः स्थेयात्पृथिव्या चिरं ॥३९॥
रस-वृष-यति-चंद्रे ख्यातसंवत्सरे(१७१६)ऽस्मिम्
नियमितसितवारे वैजयंती-दशम्या।
अजितजिनचरित्रं बोधपात्रं बुधाना
रचितममलवाग्मि-रक्तरत्नेन तेन ॥४०॥
मुद्गले भूभुजा श्रेष्ठे राज्येऽवरंगसाहिके।
जहानावाद-नगरे पार्श्वनाथजिनालये ॥४१॥

[ सरसावा-मन्दिर-प्रति

## ७३. आदिनाथ-फाग ( भ० ज्ञानभूषण )

**आदिभाग :—**

यो वृन्दारक-वृन्द-वन्दित-पदो जातो युगादौ जयी
हत्वा दुर्जय-मोहनीयमखिलं शेषश्च घातित्रयम्।
लब्ध्वा केवल-बोधनं जगदिदं संबोध्य मुक्ति गत-
स्तत्कल्याणक-पञ्चकं सुरकृतं व्यावर्णयामि स्फुटं ॥१॥

**अन्तभाग :—**

सर्व्वानेव नवोनषट्शतमितान्(५९१)श्लोकान्विबुध्याऽत्र वै
शुद्धं ये सुधियः पठन्ति सततं ते पाठयन्त्वादरात्।
ये केचिन्निपुणा लिखन्ति लिखने ते शुद्धवर्णैः स्वय-
मन्यार्थं किल लेखयन्तु च पुरोः कल्याण-व्यावर्णनम्॥
विख्यातो भुवनादिकीर्तिमुनिपः श्रीमूलसंघेऽभवत्
तत्पट्टेऽजनि बोधभूषणमुनिः स्वात्मस्वरूपे रतः।
जाता प्रीतिरतीव तस्य महता कल्याणकेषु प्रभो-
स्तेनेदं विहितं ततो जिनपतेराद्यस्य तद्वर्णनम्॥

## ७४. भक्तामरस्तोत्र-वृत्तिः ( ब्र० रायमल्ल )

आदिभाग :—

श्रीवर्धमानं प्रणिपत्य मूर्ध्ना दोषैर्व्यपेतं ह्यविरुद्धवाचं ।
वक्ष्ये फलं तद्वृषभस्तवस्य सूरीश्वरैर्यत्कथितं क्रमेण ॥१॥

अन्तभाग :—

सकलेन्द्रोर्गुरोर्भ्रातुर्जेसेति वर्णिनः सतः ।
पादस्नेहेन सिद्धेयं वृत्तिः सारसमुच्चया ॥३॥

(इसके पश्चात् दो श्लोकोंमें काव्योंका फल वर्णन किया है)

श्रीमद्हूबड़वंशमंडणमणिर्मह्येति नामा वणिक् ।
तद्भार्यागुणमंडिता व्रतयुता चम्पामितीताभिधा(?)॥६॥
तत्पुत्रो जिनपादकंजमधुपो रायादिमल्लो व्रती ।
चक्रे वृत्तिमिमां स्तवस्य नितरां नत्वा श्री(सु ?)वादींदुकं ॥७॥
सप्तषष्ठ्यंकिते वर्षे षोडशाख्ये हि संवते(१६६७) ।
आषाढश्वेतपक्षस्य पंचम्यां बुधवारके ॥८॥
श्रीवापुरे महासिन्धोस्तटभागं समाश्रिते ।
प्रोत्तुंग-दुर्ग-संयुक्ते श्रीचन्द्रप्रभ-सद्मनि ॥९॥
वर्णिनः कर्मसीनाम्नः वचनात् मयकाऽरचि ।
भक्तामरस्य सद्वृत्तिः रायमल्लेन वर्णिना ॥१०॥

इति श्रीब्रह्मरायमल्ल-विरचिता भक्तामरस्तोत्रवृत्तिः समाप्ता ।

[ रोहतक-मन्दिर-प्रति

## ७५. हरिवंशपुराण ( ब्रह्म जिनदास )

आदिभाग :—

सिद्धं सम्पूर्ण-भव्यार्थं सिद्धेः कारणमुत्तमं ।
प्रशस्त-दर्शज्ञान-चारित्र-प्रतिपादनम् ॥१॥

सुरेन्द्र-मुकटाश्लिष्ट-पादपद्मांशुकेशरं ।
प्रणमामि महावीरं लोकत्रितय-मंगलम् ॥२॥*
वन्दे नेमीश्वरं भक्त्या त्रिदशाधिप-वंदितं ।
त्रिजगत्पूज्यपादाब्जं समस्ताऽघविनाशनं ॥३॥

× × ×

श्रीवीरजिननाथोक्तो गौतमं गणनायकं ।
सोऽर्थः प्राप्तः सुधर्म्मं च श्रीजम्बूस्वामिनं ततः ॥४६॥
विद्युच्चरं ततः कीर्त्तिमनुत्तरविदं क्रमात् ।
रविषेणाभिधाचार्यं जिनसेनगुरुं ततः ॥४७॥
तद्वाक्यरचना प्राप्य मयाऽत्र क्रियते स्फुटं ।
ग्रन्थं सुखेन मनुजा यथा जानंति सत्कथा ॥४८॥
भद्रबाहुं प्रणम्याथ यतिसंघनमस्कृतं ।
श्रीकुंन्दकुन्दाचार्यादीन् मुनीन् रत्नत्रयांकितान् ॥४९॥
गुरुसकलकीर्तिं च श्रुताम्भोधिं महामुनिं ।
भक्त्या भुवनकीर्तिं च चंचत्कीर्तिं तपोनिधिं ॥५०॥
निर्ग्रंथान् शुद्धचारित्रानित्याद्यानपरानपि ।
अनुक्रमात्संगमुक्तान् रागद्वेषातिगान् सदा ॥५१॥
तन्मया जिनदासेन सद्धेपादुच्यतेऽधुना ।
हरिवंशस्य चरितं भव्य-श्रुति-सुखाकरं ॥५२॥

अन्तभाग :—

श्रीमन्नेमिचरित्रमुत्तममिदं नानाकथापूरित
पापध्वान्त-विनाशनैक-तरणिः कारुण्यवल्लीवनं ।

---

* ये दोनों श्लोक मूलतः श्रीरविषेणाचार्यकृत पद्मचरितके हैं। अन्य पद्योंकी तरह इन्हें भी ग्रन्थमें उद्धृत किया गया है।

भव्यश्रेणिमनःप्रमोदसदनं भक्त्याऽनघं कीर्तनं
नानासत्पुरुषालिचेष्टितयुतं पुण्यं शुभं पावनं ॥३२॥
श्रीवर्द्धमानेन जिनेश्वरेण त्रैलोक्यवद्येन [यदुक्त]मादौ ।
ततः पर गौतमसंज्ञकेन गणेश्वरेण प्रथित जनाना ॥३३॥
ततः क्रमाच्छ्रीजिनसेननाम्नाचार्येण जैनागम-कोविदेन ।
सत्काव्यकेलीसदनेन पृथ्व्या नीतं प्रसिद्धं चरित हरेश्च ॥३४॥
श्रीकुन्दकुन्दान्वयभूषणोऽथ बभूव विद्वान् किल पद्मनन्दी ।
मुनीश्वरो वादिगजेन्द्रसिंहः प्रतापवान् भूवलये प्रसिद्धः ॥३५॥
तत्पट्टपंकेजविकाशभास्वान् बभूव निर्ग्रन्थवरः प्रतापी ।
महाकवित्वादिकलाप्रवीणस्तपोनिधिः श्रीसकलादिकीर्तिः ॥३६॥
पट्टे तदीये गुणवान्मनीषी क्षमानिधानो भुवनादिकीर्तिः ।
जीयाच्चिर भव्यसमूहवद्यो नानायतिव्रातनिषेवणीयः ॥३७॥
जगति भुवनकीर्ति भूतले ख्यातकीर्तिः श्रुतजलनिधिवेत्ताऽनगमानप्रमेत्ता ।
विमलगुणनिवासश्छिन्नसंसारपाशः स जयति जिनराजः साधुराजीसमाजः॥३८
सद्ब्रह्मचारी गुरुपूर्वकोऽस्य भ्राता गुणज्ञोऽस्ति विशुद्धचित्तः ।
जिनस्य दासो जिनदासनामा कामारिजेता विदितो धरित्र्या ॥३९॥
श्रीनेमिनाथस्य चारित्रमेतदनेन नीत्वा रविषेण(जिनसेन)सूरेः ।
समुद्धृत स्वान्यसुखप्रबोधहेतोश्चिरं नदतु भूमिपीठे ॥४०॥

इति श्रीहरिवंशपुराणे भट्टारक सकलकीर्तिशिष्यब्रह्मजिनदास-विरचिते *श्रीनेमिनाथ-निर्वाणवर्णनो नामैकोनचत्वारिंशत्तमः सर्गः ।*

## ७६. सिद्धान्तसार ( नरेन्द्रसेनाचार्य )

**आदिभाग :—**

भूर्भुवःस्वस्त्रयीनाथं त्रिगुणात्मत्रयात्मकं ।
त्रिभिः प्राप्तपरधाम वन्दे विध्वस्तकल्मषं ॥१॥

नित्याद्येकान्त-विध्वंसि मतं मतिमता मतं ।
यस्य सः श्रीजिनः श्रेयान् श्रेयांसि वितनोतु नः ॥२॥
श्रीमच्छ्रीजिनचन्द्रस्य वर्द्धमानस्य शासनं ।
देवैर्दीप्तगुणैर्दृष्टमिष्टमत्राऽभिनन्दतु ॥३॥
जैनीं द्विसप्तति नत्वाऽतीतानागतवर्तिनीं ।
तत्त्वार्थसंग्रहं वक्ष्ये दृष्ट्वागमपरम्परा ॥४॥

अन्तभाग :—

श्रीवर्द्धमानस्य जिनस्य जातो मेदार्यनामा दशमो गणेशः ।
श्रीपूर्णतल्लाकि(छि)त-देह-सस्थो यत्राभवत्स्वर्गसमा धरित्री ॥८३॥
कल्पोत्त्री(र्वी)रुहतुल्याश्च हारकेयूरमण्डिताः ।
जाता ज्ञाय(त)स्ततो ज्ञाता सघोऽसौ ग्याटवागड़ः ॥८४॥
जातस्तत्र सता मित्रः पद्मसेनो महामुनिः ।
यच्छिष्यकिरणाः सर्वे संप्रतप्यन्ति दुस्सहाः ॥८५॥
श्रीधर्मसेनोऽजनि तत्र संघे दिगम्बरः श्वेततरैर्गुणैः स्वैः ।
व्याख्या सुदन्तांशुभिरुल्लसद्भिर्वस्त्रावृतो यः प्रतिभासते स्य(स्म)॥८६॥
भंजन्वादीन्द्रमानं पुरि पुरि नितरां प्राप्नुवन्नुच्चमानं
तन्वन् शास्त्रार्थदानं रुचि रुचि रुचिरं सर्वथानिर्निदानं ।
विद्यादर्शोपमानं दिशि दिशि विकिरिन् स्वय(स्वं) यशो योऽसमानं
तस्माच्छ्रीशान्तिषेणः समजनि सुगुरुः पाप-धूली-समीरः ॥८७॥
यत्रास्पदं विदधती परमागमश्रीरत्यन्यमन्यत्तसतीत्वमिह तु चित्रं ।
वृद्धा च संततमनेकजनोपभोग्या श्रीगोपसेनगुरुराविरभूत्स तस्मात् ॥८८॥
उत्पत्तिस्तपसा पदं च यशसामन्यो रविस्तेजसा-
मादिः सद्वचसा विधिः सुतरसामासीन्निधिः श्रेयसा ।
आवासो गुणिनां पिता च शमिनां माता च धर्मात्मनां
न ज्ञातः कलिना जगत्सुवलिना श्रीभावसेनस्ततः ॥८९॥

ख्यातस्तत श्रीजयसेननामा जातस्तपःश्रीत्ततदुःकृतौघः।
सत्तर्कविद्यार्णव-पारदृष्वा विश्वासगेहं करुणास्पदानाम् ॥६०॥

आचार्यः प्रशमैकपात्रमसमः प्रज्ञादिभिस्वैर्गुणैः
पट्टे श्रीजयसेननामसुगुरोः श्रीब्रह्मसेनो यतिः।
सज्जल्पाम्बुधिमध्यमग्नवपुग्रः शश्वद्विकल्पोर्मितः(भि ?)
जल्पाका परवादिनोऽत्र विकलाः के के न जाता क्षितौ ॥६१॥

तस्मादजायत गणी गुणिना गरिष्टो भव्याम्बुजप्रतिविकाशन-पद्मबन्धुः।
कंदर्पदर्पदलने भुवनैकमल्लो विख्यातकीर्तिरवनौ कविवीरसेनः ॥६२॥
श्रीवीरसेनस्य गुणादिसेनो जातः सुशिष्यो गुणिना विशेष.।
शिष्यस्तदीयोऽजनि चारुचित्त' सद्दृष्टिवन्तो(वान)त्र नरेन्द्रसेन' ॥६३॥

गुणसेनोदयसेनौ जयसेनो सम्बभूवुराचार्याः।
तेषा श्रीगुणसेनः सूरिर्जातः कलाभूरिः ॥६४॥

अतिदु.षमानिकटवर्तिनि कालयोगे नष्टे जिनेन्द्रशिववर्त्मनि यो बभूव।
आचार्यनामनिरतोऽत्र नरेन्द्रसेनस्तेनेदमागमवचो विशद निवद्धम् ॥६५॥

इति श्रीसिद्धान्तसार(तत्त्वार्थ)सग्रहे आचार्यश्रीनरेन्द्रसेन-विरचिते द्वादशमः परिच्छेद ॥१२॥

## ७७. द्रौपदी-प्रबंध ( जिनसेन सूरि )

आदिभाग :—

स्रष्ट्रे (सृष्टेः) षोडशतीर्थाय कृतनामेति शान्तये।
चक्रेशाय जिनेशाय नमः शान्ताय शान्तये ॥१॥
येन सप्तदश तीर्थं प्रावर्त्त पृथुकीर्त्तिना।
तस्मै कुन्थुजिनेन्द्राय नमः प्राक्चक्रवर्त्तिने ॥२॥
नमोऽष्टादशतीर्थेन प्राणिनामिष्टकारिणे।
चक्रपाणिजिनाऽराय निरस्तदुरितारये ॥३॥

भास्वते हरिवंशाद्रिश्रीशिखामणये नमः ।
द्वाविंशत्तीर्थसच्चक्रनेमयेऽरिष्टनेमये ॥४॥
त्रिहीननवकोटीना **मुनीनां** पादपंकजान् ।
स्मरामि स्मरजेतृणा तारतृणा भववारिधौ ॥५॥
**गौतमः** श्रीसुधर्मा च जंब्वाख्यो मुनिपुङ्गवाः ।
त्रयः केवलिनः पूज्या नित्यं नः सन्तु सिद्धये ॥६॥
सृष्टिः(ष्टे.) **समयसारस्य** कर्ता सूरिपदेश्वरः ।
श्रीमते(?) कुंदकुंदाख्यस्तनुते मे दुरामतिः(?) ॥७॥
**समन्तभद्रो** भद्रार्थो भातु भारतभूषणः ।
**देवागमेन** येनाऽत्र व्यक्तो देवागमः कृतः ॥८॥*
यथा मूको विवक्तुः सन् याति हास्यं जगत्त्रये ।
तथा शास्त्रं विवक्तुः सन् लोकेऽहं हास्यभाजनम् ॥९॥
यथा जिगिमिषुः पंगुः मेरुमूर्द्धानमुन्नतं ।
विहस्यते जनैः शास्त्रं चिकीर्षुश्चाहमंजसा ॥१०॥

**अन्तभाग :—**

द्वाविंशतिसमुद्रायुः अप्रवीचारसत्सुख ।
कथिता **जिनसेनेन** द्रौपदीयप्रन्बधके ॥६४॥
वक्ता श्रोता प्रबन्धो शीलसंयुक्तभाग्यः
जिनकथितसुमार्गः क्रियते(?) भव्यराशिः । (...)
द्रौपद्याल्पचरित्रमेतदमिहं(ह) पिडीकृतामासनैः(?)
चतुर्विंशति पंचशतानि गदिता सूरिस्य(?)जिनसेनवा(?) ॥६५॥

---

* भ० शुभचन्द्रके पाण्डवपुराण की प्रशस्तिमें भी यही-श्लोक पाया जाता है (पृ० ४८)। और इस ग्रन्थके कर्ता जिनसेन कौनसे जिनसेन हैं तथा कब हुए हैं, यह अभी निर्णीत नहीं। आदिपुराण तथा हरिवंशपुराण-के कर्ता जिनसेनकी तो यह कृति मालूम नहीं होती ।

## ७८. यशोधर-चरित ( भ० सोमकीर्ति )

**आदिभाग :—**

प्रणम्य शंकर देव सर्वज्ञ जितमन्मथ ।
रागादिसर्वदोषघ्नं मोहनिद्रा-विवर्जितं ॥१॥
अर्हतः परमाभक्त्या सिद्धान्सूरीश्वरांस्तथा ।
पाठकान् साधव(का)श्चेति नत्वा परमया मुदा ॥२॥
यशोधरनरेन्द्रस्य जनन्या सहितस्य हि ।
पवित्र चरित वक्ष्ये समासेन यथागमं ॥३॥
जिनेन्द्रवदनोद्भूता नमामि शारदां परा ।
श्रीगुरुभ्य. प्रमोदेन श्रेयसे प्रणमाम्यहम् ॥४॥
यत्प्रोक्त हरिषेणाद्यैः पुष्पदंतपुरस्सरैः ।
श्रीमद्वासवसेनाद्यैः शास्त्रस्यार्णवपारगैः ॥५॥
तच्चरित मया नूनं बालेन शक्यते कथ ।
बाहुभ्या सागर घोर केनापि तरितुं यथा ॥६॥
तेषा हि क्रमयोर्द्वंद्वं नमस्कृत्यातिभक्तितः ।
समुपार्ज्यं महत्पुण्यं कुर्वे दूरेण पातक ॥७॥

**अन्तभाग :—**

नदीतटाख्यगच्छे वशे श्रीरामसेनदेवस्य ।
जातो गुणार्णवैकश्च(वश्चैकः) श्रीमाश्च(मान्) श्रीभीमसेनेति॥६०॥
निर्मित तस्य शिष्येण श्रीयशोधरसज्ञकं ।
श्रीसोमकीर्तिमुनिना विशोध्याऽधीयता बुधाः ॥६१॥
वर्षे षट्त्रिंशसख्ये तिथिपरगणनायुक्तसवत्सरे(१५३६) वै ।
पचम्या पौषकृष्णे दिनकरदिवसे चोत्तरास्ये(स्थे) हि चद्रे ।
गोंढिल्यां मेदपाटे जिनवरभवने शीतलेन्द्रस्य रम्ये
सोमादिकीर्तिनेदं नृपवरचरित निर्मित शुद्धभक्त्या ॥६२॥

ग्रन्थाग्र तु सहस्त्रैकमष्टादशसमन्वितं(१०१८)।
चरितेदं चिरं जीयात्पवित्र पापनाशन ॥६३॥

इति श्रीयशोधरचरिते श्रीसोमकीर्त्याचार्य-विरचिते अभयरुचिभट्टारक-स्वर्गगमनो नाम अष्टमः सर्गः ॥८॥ ग्रन्थाग्रन्थ १०१८ ॥

इति श्रीयशोधरचरितं समाप्तं।

## ७६. वर्धमानचरित (कवि असग)

**आदिभाग :—**

श्रिय त्रिलोकीतिलकायमानामात्यन्तकीं ज्ञातसमस्ततत्त्वम्।
उपागतं सन्मतिमुज्ज्वलोक्तिं वदे जिनेन्द्रं हतमोहतद्रम् ॥१॥

**अन्तभाग :—**

(प्रथम प्रशस्ति)

मुनिचरणरजोभिः सर्वदा भू(पू)तधात्र्या, प्रणतिसमयलग्नैः पावनीभूतमूर्धा।
उपशमइवमूर्त्तः शुद्धसम्यक्त्वयुक्तः पटुमतिरितिनाम्ना विश्रुतः श्रावकोऽभूत्॥१
तनुमपि तनुता यः सर्वपर्वोपवासैस्तनुमनुमप(पम?)धीः स प्रापयन्सचिनोति।
सततमपि विभूतिं भूयसीमन्नदान-प्रभृतिभिरुरुपुण्यं कुन्दशुभ्र यशश्च ॥२॥
भक्तिं परामविरता समपक्षपातामातन्वती मुनिनिकायचतुष्टयेऽपि।
वैरित्तिरित्यनुपमा भुवि तस्य भार्या सम्यक्त्वशुद्धिरिव मूर्तिमती सदाऽभूत्॥३
पुत्रस्तयोरसग इत्यवदातकीर्त्योरासीन्मनीषिनिवहप्रमुखस्य शिष्यः।
चन्द्रांशुशुभ्रयशसो भुवि नागनंद्याचार्यस्य शब्दसमयार्णवपारगस्य ॥४॥

सद्वृत्तं दधता स्वभावमृदुना निःश्रेयसप्रार्थिना
साधूना हृदयोपमेन शुचिना संप्रेरितः प्रेयसा।
एतत्सादरमाऽऽर्यनंदिगुरुणा सिद्ध्यै व्यधत्ताऽसगः
कीर्त्युत्कीर्तनमात्रचारुचरित श्रीसन्मतेः सन्मतेः ॥५॥

इति-वर्धमानचरित्रं-समाप्तम् ॥*

---

* यह प्रशस्ति पिटर्सन साहबकी चौथी रिपोर्टमें प्रकाशित हुई थी

(द्वितीय प्रशस्ति)

कृत महावीरचरित्रमेतन्मया पर-स्व-प्रतिबोधनार्थं ।
सप्ताधिक त्रिंशभवप्रबंधं पुरूरवाद्यन्तिमवीरनाथ ॥१०३॥

वर्द्धमानचरित्र यः प्रव्याख्याति शृणोति च ।
तस्येह परलोकेऽपि सौख्य सजायते तराम् ॥१०४॥

संवत्सरे दशनवोत्तरवर्षयुक्ते(६१०) भावादिकीर्तिमुनिनायकपादमूले ।
मौद्गल्यपर्वतनिवासव्रतस्थसपत्सच्छ्रावकप्रजनिते सति निर्ममत्वे ॥१०५॥

विद्या मया प्रपठितेत्यसगाह्वकेन श्रीनाथराज्यमखिलं-जनतोपकारि ।
प्राप्य च चौडविषये वरलानगर्या ग्रन्थाष्टक च समकारि जिनोपदिष्टं ॥१०६॥

इत्यसगकृते वर्द्धमानचरिते महाकाव्ये महापुराणोपनिषदि भगवन्निर्वाणगमनो नामाष्टादशः सर्गः* ॥

नोट—इन दोनों प्रशस्तियोंका विशेष ऊहापोह सम्पादक-द्वारा जैनहितैषी भाग ११ के अन्तर्गत 'पुरानी बातोंकी खोज' शीर्षक लेखमालामें किया गया है ( देखो, उक्तलेखमालाका 'असगकृत वर्द्धमानचरित्रकी दो विभिन्न प्रशस्तियाँ' नामका ६ वाँ लेख, पृ० ३३६ से ३४३ ) ।

---

और उन्होंने इसे सवत् १६७६ आश्विनमासकी लिखी उस प्रतिपरसे लिया था जो किसी समय मूलसघी हर्षकीर्त्ति मुनिकी थी ( देखो, रायल एशियाटिक सोसाइटी बम्बई ब्राचके जर्नलका ऐक्स्ट्रा नम्बर, सन् १८६४ ) ।

* यह प्रशस्ति आरा जैनसिद्धान्तभवनकी एक ताडपत्रीय प्रतिपरसे ली गई है, जिसका प्रथम-सर्गात्मक आदिभाग खण्डित है । बम्बई के मन्दिरकी प्रतिमें भी यह प्रशस्ति साधारणसे पाठभेद तथा कुछ अशुद्धियोंके साथ पाई जाती है ।

## ८०. शान्तिनाथ-पुराण ( कवि असग )

**आदिभाग :—**

श्रियं समग्रलोकाना पायिनीमनपायिनीं।
बिभ्रतेऽपि नमस्तुभ्यं वीतरागाय शान्तये ॥१॥
अशेषभव्यसत्वाना संसारार्णवतारण।
भक्त्या रत्नत्रयं नौमि विमुक्तिसुखकारणं ॥२॥
लीलोत्तीर्णाखिलामेयविपुलज्ञेयसागरान्।
इन्द्राभ्यर्च्यान् यतीन् वन्दे शुद्धान् गणधरादिकान् ॥३॥
सुमेधोभिः पुरा गीतं पुराण यन्महात्मभिः।
तन्मया शान्तिनाथस्य यथाशक्ति प्रवक्ष्यते ॥४॥

**अन्तभाग :—**

मुनिचरणरजोभिः सर्वदाभू(पू?)तधात्र्यां प्रणातिसमयलग्नैः पावनीभूतमूर्द्धा
उपशम इव मूर्तः शुद्धसम्यक्त्वयुक्तः पटुमतिरिति नाम्ना विश्रुतः श्रावकोभूत्।
तनुमपि तनुता यः सर्वपर्वोपवासैस्तनुमनुपमधीः स प्रापयन् संचिनोति
सततमपि विभूतिं भूयसीमन्नदानप्रभृतिभिरुरुपुण्यं कुदशुभ्र यशश्च ॥२४३॥
भक्तिं परामविरता समपक्षपातामानन्वती मुनिनिकायचतुष्टयेऽपि।
वैरेतिरित्यनुपमा भुवि तस्य भार्या सम्यक्त्वशुद्धिरिव मूर्तिमती पराऽभूत्॥२४४
पुत्रस्तयोरसग इत्यवदातकीर्त्योरासीन्मनीषिनिवहप्रमुखस्य शिष्यः।
चद्राशुशुभ्रयशसो भुवि नागनद्याचार्यस्य शब्दसमयार्णवपारगस्य ॥२४५॥
तस्याऽभवद्भव्यजनस्य सेव्यः सखा जिनाप्यो जिनधर्मसक्तः।
ख्यातोऽपि शौर्यात्परलोकभीरुर्द्विजातिनाथोऽपि विपक्षपातः ॥२४६॥
व्याख्यानशीलत्वमवेक्ष्य तस्य श्रद्धा पुराणेषु च पुण्यबुद्धेः।
औचित्यहीनोऽपि गुरौ निबंधे तस्मिन्नहासीदसगः प्रबन्धम् ॥२४७॥
चरितं विरचय्य सन्मतीयं सदलंकारविचित्रवृत्तबंधं।
स पुराणमिदं व्यधत्त शान्तेरसगः साधुजनप्रमोदशान्त्यै ॥२४८॥

इत्यसग-कृतौ शान्तिपुराणे भगवतो निर्वाणगमनो नाम षोडशः सर्गः ॥१६॥                    [ जयपुर प्रति

## ८१. जिनेन्द्र-कल्याणाभ्युदय ( अय्यपार्य )

आदिभाग :—

लक्ष्मीं दिशतु वो यस्य ज्ञानादर्शे जगत्रय ।
व्यदीपि स जिनः श्रीमान् नाभेयो नौरिवाम्बुधौ ॥१॥
मागल्यमुत्तमं जीयाच्छरण्यं यद्रजोहर ।
नि(नी)रहस्यमरिघ्नन्तत्पंचब्रह्मात्मकं महः ॥२॥
दोषसतापशमनी वाग्ज्योत्स्ना जिनचन्द्रजा ।
वर्धयन्ती श्रुताम्भोधिं स्वान्तध्वान्त धुनोतु नः ॥३॥
मोक्षलक्ष्म्या कृतं कंठहार-नायक-रत्नतां ।
रत्नत्रय नुमः सम्यग्दृग्ज्ञानाचारलक्षणं ॥४॥
स्याद्वादाकाशपूर्णेन्दुर्भव्याम्भोरुहभानुमान् ।
दयागुणसुधाम्भोधिर्धर्मः पायादिहार्हतां ॥५॥
अहिंसा-सूनृत-स्तेय-ब्रह्मचर्याऽपरिग्रह ।
सर्वपापप्रशमन वर्धता जिनशासनं ॥६॥
पंचकल्याणसम्पूर्णाः पंचमज्ञानभासुरः ।
वः पंचगुरुवं पान्तु पंचमीगतिसाधकाः ॥७॥
वृषभादीनह वर्धमानान्तान् जिनपुंगवान् ।
चतुर्विंशतितीर्थेशान् स्तुवे त्रैलोक्यपूजितान् ॥८॥
वन्दे वृषभसेनादीन् गणिनो गौतमान्तिमा(का)न् ।
श्रुतकेवलिनः सूरीन् मूलोत्तरगुणान्वितान् ॥९॥
अनुयोगचतुष्कादिजिनागमविशारदान् ।
जातरूपधरान्स्तोष्ये कविवृन्दारकान् गुरून् ॥१०॥

अर्हदादीनभीष्टार्थसिद्ध्यै शुद्धित्रयान्वितः ।
स्तुत्यानन्तगुणोपेतान् ध्यात्वा स्तुत्वा प्रणम्य च ॥११॥
श्रीमत्समतभद्रादिगुरुपर्वक्रमागतः ।
शास्त्रावतारसम्बन्धः प्रथमं प्रतिपाद्यते ॥१२॥
पुरा वृषभसेनेन गणिना वृषभार्हतः ।
अवधार्याऽभ्यधाय्येतद्भरतेश्वरचक्रिणे ॥१३॥
ततोऽजितजिनेन्द्रादितीर्थकृद्भ्योऽवधार्य गा ।
तत्तद्गणधरा लोके धार्मिकाणामिहाऽब्रुवन् ॥१४॥
ततः श्रीवर्द्धमानार्हद्गिरमाकर्ण्य गौतमः ।
राज्ञे लोकोपकारार्थे श्रेणिकायाऽब्रवीद्गणिः ॥१५॥
तस्माद्गणभृदाचार्याद्यनुक्रमसमागतः ।
नाम्ना जिनेन्द्रकल्याणाभ्युदयोऽयमिहोच्यते ॥१६॥
सेन-वीर-सुवीर्य-भद्र-समाख्यया मुनिपुंगवाः
नन्दि-चंद्र-सुकीर्ति-भूषण-सञ्ज्ञया मुनिसत्तमाः ।
सिंह-सागर-कुंभ-आस्रवनामभिर्यतिनायकाः
देव-नाग-सुदत्त-तुंग-समाह्वयैर्मुनयोऽभवन् ॥१७॥
तेभ्यो नमस्कृत्य मया मुनिभ्यः शास्त्रोदधिसूक्तिमणींश्च लब्ध्वा ।
हारं विरच्यार्यजनोपयोग्यं जिनेन्द्रकल्याणविधिर्व्यधायि ॥१८॥
वीराचार्य-सुपूज्यपाद-जिनसेनाचार्य-संभाषितो
यः पूर्वं गुणभद्रसूरि-वसुनन्दीन्द्रादिनन्द्यूर्जितः ।
यश्चाशाधर-हस्तिमल्ल-कथितो यश्चैकसंधिस्ततः ।
तेभ्यः स्वाहृतसारमध्यरचितः स्याज्जैनपूजाक्रमः ॥१९॥
तर्क-व्याकरणागमादि-लहरीपूर्ण-श्रुताम्भोनिधेः
स्याद्वादाम्बरभास्करस्य धरसेनाचार्यवर्यस्य च ।
शिष्येणाऽय्यपकोविदेन रचितः कौमारसेनेमुनेः-
ग्रंथोऽयं जयताज्जगत्त्रयगुरोर्बिम्बप्रतिष्ठाविधिः ॥२०॥

पूर्वस्मात् परमागमात्समुचितान्यादाय पद्यान्यह
तत्र प्रस्तुतसिद्धयेऽत्र विलिखाम्येतन्न दोषाय तत् ।
कल्याणेषु विभूषणानि धनिकादानीय निष्किंचनः
शोभार्थं स्वतनु न भूषयति किं सोराजते नाऽस्य तैः ॥२१॥

जिनेन्द्र-वाणी-मुनिसंघ-भक्त्या जिनेन्द्रकल्याणनुतिं पठित्वा।
जिनेन्द्रपूजा रचयन्ति तेऽमी जिनेन्द्रसिद्धश्रियमाश्रयन्ति ॥२२॥

इति विद्यानुवादांगविश्रुतजिनसंहिताश्रयोपासकाध्ययनेऽर्हत्प्रतिष्ठासार-संग्रहे जिनेन्द्रकल्याभ्युदये शास्त्रावतारसम्बन्धो नाम प्रथमाऽभ्युदयः ॥१॥

अन्तभाग :—

नमस्कृत्य जिनं वीरं नृसुरासुर-पूजितं ।
गुरुणामन्वयं वक्ष्ये प्रशस्तगुणशालिनाम् ॥१॥
श्रीमूलसंघव्योम्नेन्दुर्भारते भावितीर्थकृद् ।
देशे **समन्तभद्रार्यो** जीयात्प्राप्तपदर्द्धिकः ॥२॥
तत्त्वार्थसूत्रव्याख्यान-गंधहस्ति-विधायकः ।
स्वामी समन्तभद्रोऽभूद्देवागमनिदेश(दर्श)कः ॥३॥

अवटुतटमटति झटिति स्फुटपटुवाचाटधूर्जटेर्जिह्वा ।
वादिनि समन्तभद्रे स्थितिवति-का कथाऽन्येषाम् ॥४॥
शिष्यौ तदीयौ शिवकोटिनामा-शिवायनः शास्त्रविदां वरेण्यौ ।
कृत्स्नश्रुतं श्रीगुरुपादमूले ह्यधीतवन्तौ भवतः कृतार्थौ ॥५॥
तदन्वयेऽभूद्विदुषांवरिष्ठः स्याद्वादनिष्ठः सकलागमज्ञः ।
श्रीवीरसेनोऽजनि तार्किकश्रीर्विध्वस्तरागादिसमस्तदोषः ॥६॥
यस्य वाचा प्रसादेन ह्यमेयं भुवनत्रयं ।
आसीदष्टांगरूपेण गणितेन प्रमाणितं(नैमित्तज्ञानरूपं विदां वरं) ॥७॥
तच्छिष्यप्रवरो जातो जिनसेनमुनीश्वरः ।
यद्वाग्मयं पुरोरासीत्पुराणं प्रथमं भुवि ॥८॥

तदीयप्रियशिष्योऽभूत गुणभद्रः मुनीश्वरः ।
शलाकापुरुषा यस्य सूक्तिभिर्भूषिताः सदा ॥६॥
गुणभद्रगुरोस्तस्य माहात्म्यं केन वर्ण्यते ।
यस्य वाक्सुधया भूमावभिषिक्ता जिनेश्वराः ॥१०॥
तच्छिष्यानुक्रमे याते सख्येये विश्रुतो भुवि ।
गोविन्दभट्ट इत्यासीद्विद्वान्मिथ्यात्ववर्जितः ॥११॥
देवागमनसूत्रस्य श्रित्या सद्दर्शनान्वितः ।
अनेकान्तमतं तत्त्वं बहुमेने विदावरः ॥१२॥
नन्दनास्तस्य संजाता वर्धिताखिलकोविदः ।
दाक्षिणात्याटयन् तत्र स्वर्णयक्षीप्रसादतः ॥१३॥
श्रीकुमारकविस्तथ्यवाक्यो देवरवल्लभः ।
उद्यद्भूषनामा च हस्तिमल्लाभिधानकः ॥१४॥
वर्धमानकविश्चेति षडभूवन् कवीश्वराः ।
सम्यकत्वं स परीक्षितुं मदगजे मुक्ते सरण्यापुरे-
श्चास्याः पाण्ड्यमहीश्वरेण कपटाद्धन्तुं स्वमभ्यागते ।
शैलूष जिनमुद्रधारिणमपास्यासौ मदध्वसिना
श्लोकेनापि मदेभमल्ल इति यः प्रख्यातवान् सूरिभिः ॥१५॥

तद्यथाः—तिर्य्यंक् पश्यति पृष्ठतोपसरति स्तब्धे करोति श्रुती
शिक्षा न क्षमते शिरो विधुनते घटास्वनादिर्ष्यति ।
संदिग्धप्रतिहस्तिनं निजमदस्याघ्राय गंधं स्वयं
क्षामा हन्ति करेण याति न वशः क्रोधोद्धुरः सिन्धुरः ॥१६॥

सोऽयं समस्तजगदूर्जितचारुकीर्तिः स्याद्वादशासनरमाश्रितशुद्धकीर्तिः ।
जीयादशेषकविराजकचक्रवर्ती श्रीहस्तिमल्ल इति विश्रुतपुण्यमूर्तिः ॥१७॥

तस्यान्वये वरगुणो गुणवीरसूरिः ।
साक्षात्तपोबल-विनिर्जित-सम्बरारिः ॥१८॥

धर्मामृताम्बुभृत्सूक्तनरो विहारी।
जैनो मुनिर्जयतु भव्यजनोपकारी ॥१९॥
आसीत्तत्प्रियशिष्यः कामक्रोधादिदोषरिपुविजयी।
श्रीपुष्पसेननामा मुनीश्वरः कोविदैकगुरुः ॥२०॥
श्रीमूलसंघ-भव्याब्ज-भानुमान् विदुषा पतिः।
पुष्पसेनार्यवर्योऽभूत्परमागमपारगः ॥२१॥
यश्चार्वाकानजैषीत् सुगत-कणभुजोर्वाक्यभंगीरभाक्षी-
दक्ष्येपीदक्षपादोदितमतमतनीतपारमर्षापकर्षं(?)।
शोभा प्राभाकरीं तामपहृतविमता भाट्ट-विद्या मनीषी
देवोऽसौ पुष्पसेनो जगति विजयते वर्धिताऽर्हन्मतश्रीः ॥२२॥
तच्छिष्योऽन्यमतान्धकारमथनः स्याद्वादतेजोनिधिः
साक्षाद्राघवपाण्डवीयकविताकान्तारमूढात्मनाम्।
व्याख्यानाशुचयैः प्रकाशितपदन्यासो विनेयात्मना
स्वान्ताम्भोजविकाशको विजयते श्रीपुष्पसेनार्यमान् ॥२३॥
श्रीमद्धर्मे गुणाना गणमिह दयया सम्यगारोप्य रूढो
बाह्यान्तस्सत्तपोऽश्व व्रतनियमरथ मार्गणौघैर्गुणाकैः।
लक्षीकुर्वन् न लक्ष्य मनसिजमजयन् मोक्षसंदानचित्त-
स्त्रैलोक्यं शासितारं जयति जिनमुनिः पुष्पसेनः सधर्मा ॥२४॥
पुष्पसेनमुनिर्भाति भीमसेनइवाऽपरः।
बृहत्त्याग-दया-युक्तो दुःशासनमदापहः ॥२५॥
बाणास्तपो धनुर्धर्मो गुणा नामावलिर्गुणः।
पुष्पसेनमुनिर्धन्वी शरव्यं पुष्पकेतन ॥२६॥
तं पुष्पसेनदेव कलिकालगणेश्वरं सदा वन्दे।
यस्य पदपद्मसेवा विबुधाना भवति कामदुघा ॥२७॥
तदीयशिष्योऽजनि दाक्षिणात्यः श्रीमान्द्विजन्मा भिषजावरिष्ठः।
जिनेन्द्रपादाम्बुरुहैकभक्तः सागारधर्मः करुणाकराख्यः ॥२८॥

तस्यैव पत्नी कुलदेवतेव पतिव्रतालंकृतपुण्यलक्ष्मीः ।
यदर्कमाम्बा जगति प्रतीता चारित्रमूर्तिर्जिनशासनोत्का ॥२६॥
तयोरासीत्सूनुस्सदमलगुणाढ्यः सविनयो
जिनेन्द्र-श्रीपादाम्बुरुह-युगलाराधनपरः ॥
अधीतिः शास्त्राणामखिलमणिमन्त्रौषधवता ।
विपश्चिन्निर्णेता नयविनयवानाऽऽर्य इति यः ॥३०॥
श्रीमूलसङ्घकथिताखिलसन्मुनीनां श्रीपादपद्मसरसीरुहराजहंसः ।
स्यादय्यपार्य इति काश्यपगोत्रवर्यो जैनालपाकवरवंशसमुद्रचन्द्रः ॥३१॥
प्रसन्नकविरावृतैः प्रवचनागविद्यामृतैः परमतत्त्वधर्मामृतैः सुधाकर इवाऽपरो-
ऽखिलकराभिरामः सदा चकास्ति सुकृतोदयः कुवलयोत्सवः श्रीयुतः ॥३२॥
कवितानाम काप्यन्या सा विदग्धेषु रज्यते ।
केपि कामयमानास्ता क्लिश्यते हन्त बालिशाः ॥३३॥
स्वस्त्यस्तु सज्जनेभ्यो येषा हृदयानि दर्पणसमानानि ।
दुर्वचन-भस्म-सगादधिकतरं यान्ति निर्मलताम् ॥३४॥
स्वस्त्यस्तु दुर्जनेभ्यो यदीयभीत्या कविव्रजाः सर्वे ।
रचयन्ति सरससूक्तिं कवित्वरचनासु ये कृतिषु ॥३५॥
असता संगपंकेन यदंगं मलिनीकृतं ।
तदहं धौतुमिच्छामि साधुसंगतिवारिणा ॥३६॥
सुस्वरत्वं सुव्रतत्व साहित्यं भाग्यसंभवं ।
बलात्कारेण यन्नीतं स्वाधीनं नैव जायते ॥३७॥
शब्दशास्त्रमपि काव्यलक्षणं छंदसः स्थितिमजानता धृ(कृ?)तिः ।
अय्यपार्य-विदुषा विनिर्मिता कृतवरप्रसादतः(?)॥३८॥
शाकाब्दे विधुवाधिनेत्रहिमगो(१२४१)सिद्धार्थसम्वत्सरे
माघे मासि विशुद्धपक्षदशमी-पुष्यार्यवारेऽहनि ।
ग्रंथो रुद्रकुमारराज्यविषये जैनेन्द्रकल्याणभाक्
संपूर्णोऽभवदेकशैलनगरे श्रीपालबन्धू( नन्धू वा बन्धू? )जितः ॥३९॥

इति सकलतार्किक-चक्रवर्ति-समन्तभद्र-मुनीश्वर-प्रमुख-कविवृन्दारक-वृन्द-मानस-सरोवर-राजहंसायमानर्हत्प्रतिमाभिषेक-विशेष-विशिष्ट-गन्धोदक-पवित्रीकृतोत्तमाङ्गेन अय्यपार्येण श्रीपुष्पसेनार्योपदेशक्रमेण सम्यग्विचार्य पूर्वशस्त्रेभ्यः सारमुद्धृत्य विरचितः श्रीमज्जिनेन्द्रकल्याणाभ्युदयापरनामधेयोऽय त्रिंशदभ्युदयो ग्रथः समाप्तः ॥ (ग्रन्थ-श्लोकसंख्या ३५६०)

[ श्रवणवेल्गोल-दौर्बलिशास्त्रि-प्रति

## ८२. धन्यकुमार-चरित्र ( भ० गुणभद्र )

**आदिभाग :—**

स्वयंभुवं महावीरं लब्धाऽनंतचतुष्टयं ।
शतेन्द्रप्रणतं वन्दे मोक्षाय शरणं सताम् ॥१॥
प्रणमामि गुरूश्चैव सर्वसत्वाऽभयंकरान् ।
रत्नत्रयेण संयुक्तान्संसारार्णवतारकान् ॥२॥
दिश्यात्सरस्वती बुद्धि मम मन्दधियो दृढा ।
भक्त्यानुरंजिता जैनी मातेव पुत्रवत्सला ॥३॥
स्याद्वादवाक्यसंदर्भं प्रणम्य परमागमम् ।
श्रुतार्थभावनां वक्ष्ये कृतपुण्येन भाविताम् ॥४॥
क्षमंतु सज्जनाः सर्वे ये समंजस-बुद्धयः ।
शोधयंतु पद दुष्टं विशुद्धं स्थापयन्तु ते ॥५॥

× × ×

**अन्तभाग :—**

इति धन्यकुमारचरिते तत्त्वार्थभावनाफलदर्शके आचार्यश्रीगुणभद्र-कृते भव्य-वल्हण-नामाङ्किते धन्यकुमार-शालिभद्रयति-सर्वार्थसिद्धिगमनो नाम सप्तमः परिच्छेदः ॥७॥

यः संसारमसारमुन्नतमतिर्ज्ञात्वा विरक्तोऽभव-
द्दत्वा मोहमहाभटं शुभमना रागांधकारं तथा ।

आदायेति महाव्रतं भवहरं माणिक्यसेनो मुनि-
र्नैर्ग्रन्थ्य सुखद चकार हृदये रत्नत्रयं मण्डनं ॥१॥

शिष्योऽभूत्पदपकजैकभ्रमरः श्रीनेमिसेनो विभु-
स्तस्य श्रीगुरुपुंगवस्य सुतपाश्चारित्रभूषान्वितः ।
कामक्रोधमदान्ध-गन्धकरिणो ध्वसे मृगाणांपतिः
सम्यग्दर्शन-बोध-साम्य-निचितो भव्याऽबुजाना रविः ॥२॥

आचारं समितीर्दधौ दशविधं धर्मं तपः सयमम्
सिद्धान्तस्य गणाधिपस्य गुणिनः शिष्यो हि मान्योऽभवत् ।
सैद्धान्तो गुणभद्रनाममुनिपो मिथ्यात्व-कामान्तकृत्
स्याद्वादामलरत्नभूषणधरो मिथ्यानयध्वंसकः ॥३॥

तस्येयं निरलंकारा ग्रन्थाकृतिरसुन्दरा ।
अलंकारवता दृष्ट्या सालंकाराकृता न हि ॥४॥

शास्त्रमिदं कृत राज्ये राज्ञो श्रीपरमार्दिनः ।
पुरे विलासपूर्वे च जिनालयैर्विराजिते ॥५॥

यः पाठयति पठत्येव पठन्तमनुमोदयेत् ।
स स्वर्गं लभते भव्यः सर्वाद्यसुखदायकं ॥६॥

लम्बकंचुकगोत्रोऽभूच्छुभचन्द्रो महामनाः ।
साधुः सुशीलवान् शान्तः श्रावको धर्मवत्सलः ॥७॥

तस्य पुत्रो बभूवाऽत्र बल्हणो दानवान्वशी ।
परोपकारचेतस्को न्यायेनार्जित-सद्धनः ॥८॥

धर्मानुरागिणा तेन धर्मकथा-निबन्धनं ।
चरित कारितं पुण्यं शिवायेति शिवार्थिनः ॥९॥

इति धन्यकुमारचरित्रं पूर्णं जातं ॥

[ देहली-पचायती-मन्दिर प्रति

## ८३. सिद्धिविनिश्चय-टीका ( आचार्य अनन्तवीर्य )

आदिभाग :—

अकलङ्कं जिनं भक्त्या गुरुं देवीं सरस्वतीं ।
नत्वा टीकां प्रवक्ष्यामि शुद्धां सिद्धिविनिश्चये ॥१॥
अकलंक वचःकाले कलौ न कलयाऽपि यत् ।
नृषु लभ्यं क्वचिल्लब्ध्वा तत्रैवाऽस्तु मतिर्मम ॥२॥
देवस्याऽनन्तवीर्योऽपि पदं व्यक्तुं तु सर्वतः ।
न जानीतेऽकलंकस्य चित्रमेतत्परं भुवि ॥३॥
अकलंकवचोऽम्भोधेः सूक्तरत्नानि यद्यपि ।
गृह्यन्ते बहुभिः स्वैरं सद्रत्नाकर एव सः ॥४॥
सर्वधर्म[स्य] नैरात्म्य कथयन्नपि सर्वथा ।
धर्मकीर्तिः पदं गच्छेदाकलंक कथं ननु ॥५॥

शास्त्रस्यादौ तदविघ्नप्रसिद्धिप्रथनादिकं
फलमभिसमीक्ष्य सर्वज्ञमित्यादिमगलमाह । तस्यायमर्थः ।

( इसके बाद "सर्वज्ञ सर्वतत्त्वार्थ-स्याद्वादन्यायदेशिन । श्रीवर्द्धमान-मभ्यर्च्य वक्ष्ये सिद्धिविनिश्चयम्" मूलके इस मंगलपद्यका अर्थ तथा व्याख्यान है और फिर प्रथम प्रस्तावके अन्यपद्योंकी टीका है ) ।

इति श्रीरविभद्रपादोपजीव्यनन्तवीर्य-विरचिताया सिद्धिविनिश्चय-टीकाया प्रत्यक्षसिद्धिः प्रथमः प्रस्ताव. ॥१॥

अन्तभाग :—

"यथेन्द्र इत्यादि निदर्शनमत्रैवेत्थ भूतस्येत्यादिना शास्त्रार्थमुपसहरन्नाह—तदेवमित्यादि शास्त्रान्ते मगलमाह—जीयादित्यादि ॥

इति सिद्धिविनिश्चयटीकायामनन्तवीर्यविरचिताया निक्षेपसिद्धिर्द्वादशमः प्रस्तावः समाप्तः ॥

(इसके आगे ग्रन्थदान-प्रशस्ति है । टीकाकारकी कोई प्रशस्ति नहीं) ।

[ कच्छदेशस्थ कोडायग्रामकी प्रति परसे
पुरातत्वमन्दिर अहदावादमें कराई गई प्रति

## ८४. प्रायश्चित्तसमुच्चय-सचूलिक-वृत्ति ( श्रीनन्दिगुरु )

आदिभाग :—

शुद्धात्मरूपमापन्नं प्रणिपत्य गुरोर्गुरुं ।
निबन्धनं विधास्येऽहं प्रायश्चित्तसमुच्चये ॥१॥
× × × ×
प्रणम्य परमात्मानं केवलं केवलेक्षणं ।
मयाऽभिधास्यते किंचिच्चूलिकाविनिबन्धनम् ॥२॥

अन्तभाग :—

यः श्रीगुरूपदेशेन प्रायश्चित्तस्य संग्रहः ।
दासेन श्रीगुरोर्दृब्धो भव्याशय-विशुद्धये ॥१॥
तस्यैषानूदितावृत्तिः श्रीनंदिगुरुणा हि सा ।
विरुद्धं यदभूदत्र तत्क्षाम्यतु सरस्वती ॥२॥
प्रवरगुरुगिरीन्द्र-प्रोद्गता वृत्तिरेषा सकलमलकलंकक्षालनी सज्जनानां ।
सुरसरिदिव शश्वत्सेव्यमाना द्विजेन्द्रैः प्रभवतु जननूना यावदाचन्द्रतारं ॥३॥
समाप्तोऽयंग्रन्थः । ( वृत्तिसंख्या प्रायः २००० श्लोकपरिमाण है )

## ८५. योगसंग्रहसार ( श्रीनन्दिगुरु )

आदिभाग :—

भद्रं भूरिभवाम्भोधि-शोषिणे दोषमोषिणे ।
जिनेशशासनायाऽलं कुशासनविशासिने ॥१॥
सयमोद्दाममारामश्रीगुरोः पादपंकजम् ।
वंदे देवेन्द्र-वृन्दोद्यन्मौलिमालाकरार्चितम् ॥२॥
योगीन्द्रो रुन्द्रयोगाग्नि-दग्धकर्मेन्धनोऽङ्गिनाम् ।
विश्वज्ञो विश्वदृश्वाऽस्तु मंगलं मंगलार्थिनाम् ॥३॥

सद्वाग्वृत्त पदन्यास-वर्णालंकारहारिणी।
सन्मार्गाङ्ग्रि सदैवाऽस्तु प्रसन्ना नः सरस्वती ॥४॥
यस्माद्ध्यान बुधैरिष्ट साक्षान्मोक्षस्य साधनम्।
अतो मोक्षार्थिभव्येभ्यस्तदेवाऽस्माभिरुच्यते ॥५॥

अन्तभाग :—

विपुल-वाङ्मय-वारिधि-तत्वसन्मणि-मयूख-लवांशकलाकृतः।
स्मरणमात्रमिदं गदित मया किमिह दृष्टमहो न महात्मभिः ॥१७६॥
नानोपदेशकोशोऽयं सरस्वत्या मदर्पितः।
भव्यैराधीयमानोऽपि सर्वदास्त्वक्षयस्थितिः ॥१७७॥
श्रीनन्दनन्दिवत्सः श्रीनन्दीगुरुपदाब्जषट्चरणः।
श्रीगुरुदासो नन्द्यान्मुग्धमतिश्रीसरस्वतीसूनुः ॥१७८॥
इति श्रीनन्दिगुरुकृतः योगसग्रहसारः समाप्तः।

## ८६. भावशतक (कवि नागराज)

आदिभाग :—

शुभ्रं क्वचित्क्वचिदतीवसितेतराभ क्वापि प्रफुल्लनवपल्लवसन्निकाशं।
तप्त क्वचित्क्वचन शीतलमस्तु वस्तु कैवल्यसंसृतिपथानुगतं मुदे वः ॥१॥
नागराजशतग्रथं नागराजेन तन्वता।
अकारि गतवक(क्त्र)श्रीर्नागराजो गिरागुरुः ॥२॥
वसंतकाले चकिता नतांगी विशाय चक्रीकृतचापदंडं।
मनोभव सौरभशोभमानैरपूरयत् पाणियुगं प्रसूनैः ॥३॥

अन्तभाग :—

आसीत्कार्पटिगोत्रसागर-सुधाधामो मुनिः श्रीधनः
श्रीविद्याधर इत्यशेषभुवन-प्रख्यातनामामृतः।

य: केदार-पदारविंद-युगल-प्रत्यग्रपूजाविधि:
प्राप्ताशेषपवित्रभव्यविभवैः सार्थीकृतार्थी(र्थि?)श्रमः ॥६७॥

तत्पुत्रः सर्वमित्रं सुरसकविकुलश्रूयमाणोनुकीर्तिः ।
प्रख्यातोद्दालपादो जगति विजयते शङ्करेशारतंसः ॥
विष्णुर्दैत्येन्द्रयुद्धवितिकरसफलवृत्तकुतरता(?) स्वभार्यां
लक्ष्मीं निक्षिप्य यस्मिन् विरहति दनशः(?)स्वेच्छया स्वस्थचित्तः॥६८॥

तस्माजातसुजातो निजगुणमणिभिः प्रीणताशेषलोकः
केकाहंकारिकारिस्मितमहिषसुखेष्टकवशावतंसः ।
भात श्रीनागराजो परनृपतिशिरो दर्शितोद्यत्प्रतापो
राजेतेयं(?)समेते विगलितकलहे वाग्युपद्मालया(?) च ॥६९॥
भारत्ययदिपूस्त्वामामरतरुजाते(?) विवादोस्ति चेत्
सागत्व यदिमन्मथे सकलता नित्य शशाके यदि ।
सिंहे चेन्नरता जितारियशसो भावचूडामणे(?)
स्तस्तद्गुणतोपमानघटनागराजप्रभो(?) ॥१००॥
यस्तीक्ष्णायवीर(?) दुर्द्धरमहाकौक्षेयकाक्षेपणा(?)
क्षुभ्यक्षापति वल्लवोदरदरोनिशिन्नगर्भायते(?) ।
सोऽयं दुर्जयदाभुयगनियत(?)प्रौढप्रता[पा]नल-
ज्वालाज्वालखिलीकृतानागरः(?) श्रीनागराजो जयी ॥१०१॥

इतिश्रीनागराजकृतं भावशतकं सम्पूर्णं ॥

[ बम्बई ऐ०प०स० प्रति

नोट—यह प्रति बहुत ही अशुद्ध लिखी हुई है तथा त्रुटियोंसे पूर्ण है।

## ८७. तत्त्वसार-टीका ( भ० कमलकीर्ति )

**आदिभाग :—**

यद्ज्ञानं विश्व-भावार्थ-दीपकं संशयादि-हन् ।
तं वन्दे तत्त्वसारज्ञं देवं सर्वविदावर ॥१॥

सर्वविद्-हिमवद्दुक्त-सरो-द्वार-विनिर्गता ।
वाग्गगा हि भवत्वेषा मे मनोमलहारिणी ॥२॥
गुरूणा पादपद्म च मुक्तिलक्ष्मीनिकेतनं ।
मे हृत्सरसि सानद क्रीडतामन्तरायहत् ॥३॥
पुन श्रीगौतमादीना स्मृत्वा चरणपकजे ।
वक्ष्ये श्रीतत्वसारस्य वृत्ति सक्षेपतो मुदा ॥४॥

स्वस्ति । अथ श्रीनेमीश्वरमहातीर्थादियात्राविहारकर्म्म विधाय दुग्धाद्य (?) च श्रीय(प?)थपुरमागत्य महामहोत्सवपूर्वक धर्मोपदेश कुर्वतः स सतो मे यथा भेदेतररत्नत्रयात्मकमोक्षमार्ग्ग-भावना भावय तथैत्वदान (?) क्षमीकृतपरमार्थतरपलक्षणेन ठ० अ(स)तोषतनयेन सतिमयेन ठ० श्रीलषूनामधेयेनेद वचः प्रोक्त—भो कृपावारिसागर चतुर्गतिसंसाराबुधियान भट्टारकश्रीकमलकीर्तिदेव चतुर्विधसंघकृतसेव संसारशरीरभोगनिर्म्ममो मदीयो सामोऽथ तत्त्वाऽतत्त्व-हेयोपादेय-परिज्ञानलालसः ठ० श्रीअमरसिंहो वरीवर्तितस्तत्त्वोपदेशेन बोध्यते चेत्तदा चरमिताकर्णाकुलीभूतमानसे[न]मुहुर्विमृश्याल्पमतिनाऽपि मया चिंतितमिति। सर्व्वविद्योक्ततत्त्वोपदेशे पुण्य भविष्यति । पुण्येन तत्तत्वोसारोपदेशाख्य शास्त्र सम्पूर्णो भविष्यतीति मत्वा तत्त्वसारविस्तराऽवतार भावनाग्रंथ कर्त्तु समुद्यतोऽहमभव ॥छ॥ अथासन्नीकृतोपारससारतीरेण अन्तर्भावित-सकलविमलकेवलज्ञानमूर्ति-सर्व्वविन्महावीरेण समाविष्कृतसमयसार-चारित्रसार-पचास्तिकायसार-सिद्धान्तसारादिसारेण समूरीकृतबाह्याभ्यतरदुर्द्धरद्वादशविधतपोभारेण समभ्यसितसम्यक्त्वाद्यष्टगुणालकृतपरमात्मस्वभावेन तिरस्कृतासंसारायाताज्ञानोद्भव-लोकमात्रसंकल्पविकल्पात्मकविभावेन भस्मीकृतद्रव्यकर्म-भावकर्म-नोकर्ममलकलकाना सिद्धानां द्रव्यभावरूप स्तुति कर्त्तुकामेण भेदोऽभेदरत्नत्रयानुभवोद्भवसम्यग्ज्ञानमहाधामेन आसंसारप्रधावित-मोहमहाराजशीघ्रगामित मसंग्निलित(?)पदमायमानादिमिथ्यादर्शनाज्ञानाविरतिभावादिविषयकषायठकपेटकदुर्ज्जयनिर्णायसर्वविद्वीतरागोपदिष्टागमाध्यात्मसिद्धांतशास्त्राऽवतारितोपयोगेन समीप्सितसाक्षादुपे-

यसंसिद्धिशिष्टाचार-प्रपालन-नास्तिक[ता]परिहार-निर्विघ्नपरिसमस्तो(माप्ती)ति फलचतुष्टयेन स्वगततत्त्वपरगततत्त्वभेदभिन्नं तत्त्वसाराख्यं ग्रन्थमहं प्रवक्ष्यामीति कृतप्रतिज्ञेन परमाराध्यपरमपूज्यभट्टारकश्रीदेवसेनदेवेन सूत्रमिदं संवर्ण्यते ॥

इति श्रीतत्त्वसारविस्तरावतारेऽत्यासन्न-भव्यजनानंदकरे भट्टारकश्रीकमलकीर्तिदेव-विरचिते कायस्थमाथुरान्वयशिरोमणीभूतभव्यवरपुण्डरीकाऽमरसिंहमानसारविन्द-दिनकरे स्वगतपरगततत्त्वलक्षणवर्णनं नाम प्रथम पर्वं।

**अन्तभाग :—**

ग्रन्थेऽस्मिन् भावनारूपे पुनरुक्तस्य दूषण ।
भ(भा)वविद्भिर्नतद्ग्राह्यं ज्ञानवैराग्य-भूषण ॥१॥
इति तत्त्वं स्वपरगत प्रोक्तं सक्षेपमात्रतोऽपि मया
सम्यग्यदि विस्तरतो ब्रूते जिनसन्मतिः सत्यं ॥२॥
इति कतिपयवर्णैर्वर्णिताऽध्यात्मसारा परमसुखसहाया तत्त्वसारस्य टी[का]।
अवगतपरमार्था शोध्य चैना पठतु सुरमृगपतिकठे हारभूता सुरम्या ॥३॥
यावन्मेरु-मही-स्वर्ग-कुलाद्रि-गगणाऽपगाः ।
तत्त्वसारस्य टीकेय तावन्नंद[तु]भूतले ॥४॥

इति तत्त्वसारविस्तारावतारेऽत्यासन्नभव्यजनानदकरे भट्टारकश्रीकमलकीर्तिदेव-विरचिते कायस्थ-माथुरान्वय-शिरोमणीभूत-भव्यवरपुडरीकाऽमरसिंह-मानसारविन्द-दिनकरे सिद्धस्वरूपवर्णान षष्ठं पर्वं ॥६॥

सिद्धाः सिद्ध(द्धि)प्रदास्ते स्युः प्रसिद्धाष्टगुणैर्युताः ।
भोऽमर्त्यसिंह भो(?)शुद्धाः प्रसिद्धा जगता त्रयैः(ये) ॥६॥ आशीर्वादः

श्रीमन्माथुरगच्छपुष्करगणे श्रीकाष्ठसंघे मुनिः
सभूतो यतिसंघनायकमणिः श्रीक्षेमकीर्तिर्महान् ।
तत्पट्टाम्बरचंद्रमा गुणगणी श्रीहेमकीर्तिर्गुरुः
श्रीमत्संयमकीर्तिपूरितदिशापूरो गरीयानभूत् ॥१॥

अभवदमलकीर्तिस्तत्पदांभोजभानुर्मुनिगणनुतकीर्तिर्विश्वविख्यातकीर्तिः।
शम-यम-दम-मूर्तिः खंडितारातिकीर्तिर्जगति कमलकीर्तिः प्रार्थितज्ञानमूर्तिः॥२॥

[ देहली-पंचायती-मंदिर प्रति

नोट—यह ग्रन्थ प्रति बहुत कुछ अशुद्ध है। और इस प्रतिके शुरू तथा अन्त आदिमें कितने ही पत्र बादको प्रतिलिपि करके जोड़े गये हैं।

## ८८. यशोधर-महाकाव्य-पंजिका (पं० श्रीदेव)

आदिभाग :—

यशोधर-महाकाव्ये सोमदेवैर्विनिर्मिते।
श्रीदेवेनोच्यते पंजी नत्वा देवं जिनेश्वरं ॥१॥
छंद-शब्द-निघंट्वलंकृति-कला-सिद्धांत-सामुद्रक-
ज्योतिर्वैद्यक-वेद-वाद-भरताऽनंग-द्विपाऽश्वायुध-।
तर्काख्यानक-मंत्र-नीति-शकुन-क्ष्मारुह-पुराण-स्मृति-
श्रेयोऽध्यात्मजगत्स्थितिप्रवचनी-व्युत्पत्तिरत्रोच्यते ॥२॥
अर्हं वा काव्यकर्ता वा द्वावेवेश्वराविह।
विधु-ब्रध्नातिरेकेण को नामान्यस्तमोपहः ॥३॥
किंच कवेरपि विदग्धोऽहमेतत्सूक्तिसमर्थने।
यत्सौभाग्यविधौ स्त्रीणां पतिवन्न पिता प्रभुः ॥४॥
प्रयोगास्तमयाच्छन्देष्वप्रसिद्धिमयं तमः।
तत्प्रयोगोदयार्को हि निरस्यत्यसमंजसं ॥५॥
रुष्यत्याकर्षकायाऽन्धः स्वदोषेण यथा स्खलन्।
स्वयमज्ञस्तथा लोकः प्रयोक्तारं विनिंदति ॥६॥
नाऽप्रयुक्तं प्रयुंजीतेत्येतन्मार्गानुसारिभिः।
निघंटु-शब्दशास्त्रेभ्यो नूनं दत्तो जलांजलिः ॥७॥
जहे-पेलवयोन्यायान् शब्दास्तेऽत्र प्रयुंजता।
नाऽप्रयुक्तं प्रयुंजीतेत्येष येषां नयो हृदि ॥८॥

नाऽप्रयुक्तं प्रयोक्तव्यं प्रयुक्तं वाऽप्रयुज्यते ।
इत्येकांतस्ततो नास्ति वागर्थौचित्यवेदिनां ॥६॥
साग्रा दशशतीवाचामपूर्व्वा समभूदिह ।
कवेर्वागर्थसर्वंशाद्वर्णकत्रिशती तथा ॥१०॥

सुमुखः समाहितमतिरुदङ्मुखः प्राङ्मुखो वा कविः सकलैहिकामुत्रिक-व्यवहारव्युत्पत्तिकारणं काव्यमिदं चिकीर्षुः पुण्यावाप्ति-प्रत्यूह-व्यूह-व(व्यु)दासो नास्तिकतापरिहारः शिष्टाचारप्रतिपालनं परंपरया परकृतोपकाराद्य विस्मरणं वेति पंचविधं फलं । आशीर्न्नमस्क्रियावस्तुनिर्द्देशो वाऽपि तन्मुखमिति वा मनसि निधाय श्रियमित्यादिकान् श्लोकानाह ॥छ॥ कुवलयमुत्पलं भूमंडलं च । संदर्शनमवलोकनं सम्यग्दर्शनं च । कंतुः कामः । निकेतनं गृहं ।

इति श्रीसोम(श्री)देवसूरि-विरचितायां यशोधर-पंजिकायां प्रथम आश्वासः ॥१॥ [ देहली-पंचायती-मन्दिर प्रति

नोट १—इस ग्रन्थ-प्रतिकी सब संधियोंमें श्रीदेव की जगह मूलग्रन्थकार सोमदेवका ही नाम दे दिया है, जो लिपिकारकृत-अशुद्धिका परिणाम जान पड़ता है।

नोट २—इस ग्रन्थप्रतिके अन्तमें पंजिकाके कर्ताकी कोई प्रशस्ति नहीं है। यह प्रति संवत् १५३६ फाल्गुण सुदि ८ रविवारके दिन लिखा-कर मूलसंघी मुनि रत्नकीर्तिके उपदेशसे एक खंडेलवाल कुटुम्बकी ओरसे ब्रह्म होला को दान की गई है।

## ८६. पुरुषार्थानुशासन ( पं० गोविन्द )

**आदिभाग :—**

श्रियं कुर्यात्स वः कश्चिद्देवो देवेन्द्रवन्दितः ।
दृग्ज्ञानसुखवीर्याणि यस्याऽनंतान्यनन्तवत् ॥१॥
स्वभूर्विष्णुः शिवो भास्वान् शीतगुः सुगतो गुरुः ।

धर्म्मराजश्च देवेन्द्रो जिनेन्द्र स्वस्तिदोऽस्तु नः ॥२॥
शक्तिव्यक्तिकृताऽनन्तगुणाय परमात्मने ।
भक्त्यात्मनः सता शक्त्या गुणाना व्यक्तये नमः ॥३॥
ता नमामि गिर ब्राह्मीं गुरूंश्च ददतेऽङ्गिना ।
हेयादेयोपदेशेन सेचिता ये हित पदं ॥४॥

अथ मा श्रीपथान्नामपुरीन्नाकिपुरीमिव ।
स्वा श्रिय मर्त्यलोकेऽस्मिन्नाविःकर्तुमिता स्थित ॥५॥
श्रीमतो नरसिहस्याऽमरसिहस्य सन्नय ।
ननयो विनयोपेत इतिश्रीलक्ष्मणोऽभणत् ॥६॥ (द्वय)

द्वे लोकद्वयशुद्धयर्थं यशःश्रेयश्च धीमता ।
स्वर्जनीय भवेता भोः काव्येनैवाऽत्र ते भृशं ॥७॥
काव्य विधीयता किंचित्पुरुषार्थोपदेशितं ।
स्वार्थकृत्ये न धीमतो भवति यदनुद्यताः ॥८॥

श्रुत्वा तस्येति सुश्लिष्टरचन वचन मया ।
इति सोऽभाणि भो युक्त त्वयोक्त किंत्वितः शृणु ॥६॥
योगक्षेमौ सुराजाद्वा जायेते ते सुकाव्यतः ।
कुराजादिव तावेव नश्यतस्तु कुकाव्यतः ॥१०॥

काव्यं निराहुराचार्या भाव वा कर्म वा कवेः ।
तन्नष्टाऽशेषदोषं स्यात्सुकाव्यं परथा पर ॥११॥
अशत्वाद्वा प्रमादाद्वा शब्दादौ स्खलनं कवेः ।
दोष स्यात्ते तु शब्दाद्याः प्रभूताः काव्यहेतवः ॥१२॥

तत्त्वा स्ते जानते केचिदप्रमत्ताः सुमेधसः ।
विश्ववाङ्मयवाराशेः पारैयैरुद्यतैर्गतं ॥१३॥
तादृशा मादृशा येषां नाभूद्योगोपि तेपि चेत् ।
सुकाव्यायोद्यमं कुर्युं धृष्टत्वं विमतः पर ॥१४॥

किञ्च— भगवन्समन्तभद्रः श्रीमद्भट्टाकलङ्क इत्याद्याः ।
चक्रुस्तर्कग्रन्थान्कुतर्कविक्षेपदक्षांस्तान् ॥१५॥
श्रीपूज्यपादभगवत्प्रमुखाः विमुखा कुमार्गतो कुर्वन् ।
व्याकरणानि नृणा वाङ्मल[ग्नः?]व्याकरणनिपुणानि ॥१६॥
जिनसेनो गुणभद्रो रविषेणश्चैवमादिकविराजाः ।
महता निहताहासि व्यधुः पुराणानि पुरुषाणा ॥१७॥
श्रीभट्ट-वट्टकेरादयो दुरंतावपाशशास्त्राणि ।
सुमधुरगिरो व्यरचयननगाराचारशास्त्राणि ॥१८॥
श्रीशिवकोटिमुनीश्वरपुरोगमाः स्ववगतागमा नृणा ।
ज्ञानतपश्चारित्रं सदर्शनं दर्शयामासुः ॥१९॥
श्रीकुन्दकुन्दसूरिः श्रीमदुमास्वातिदेव इत्याद्याः ।
साधु व्यदधुस्तत्त्वग्रन्थानुद्दिष्टपरमार्थान् ॥२०॥
श्रीसोमदेवपूर्वा अकुर्वताऽपूर्वशब्दसर्वस्वाः ।
निरवद्यगद्यपद्यश्चम्पूःकृतबुधशिरःकम्पाः ॥२१॥
श्रीवीरनन्दिदेवो धनञ्जयश्चाऽसगो हरिश्चन्द्रः ।
व्यधुरित्याद्याः कवयः काव्यानि सदुक्तियुक्तीनि ॥२२॥
श्रीजयसेनाचार्योऽमितगतियतिरेवमादयः सदयाः ।
ग्रन्थीकृत्य सदर्थानगारिणामूचुराचारान् ॥२३॥
इत्याद्यागमभेदान्विहितमनोवाग्वपुःमलच्छेदान् ।
सर्वानपि जितदुर्णयचक्राः कविचक्रिणश्चक्रुः ॥२४॥
इत्यादिपौरस्त्यमहाकवीना रुग्भी रवीनामिव यत्र वाग्भिः ।
प्रकाश्यते विश्वपदार्थजातं न तत्र भात्यन्यवचः प्रदीपः ॥२५॥
अन्यच्च—भूवाच्यते कलौ जाताः प्रभूताः साम्प्रतं खलाः ।
कुर्व्वंतोऽपकृतीरेव नृणामाराधिताश्च ये ॥२६॥
वंद्यानामपि निन्दन्ति ये गिराविमलाः खलाः ।
मादृशा किन्नते गोप्नाः कृपा कुर्य्यरजासु किं ॥२७॥

तथा च—

द्वित्रा एवात्र ते सन्तो मणयो वा सुजातयः ।
नयंति सुषमाभास्य सुवर्णमपि ये स्वयं ॥२८॥
तावन्त एव ते मन्येऽणवः स्पष्टाः ससर्ज यैः ।
सन्तोऽसतोऽन्यथा मृज्यान्न स नास्ति विधिर्विधीः ॥२६॥

तत्किं काव्यावधानेन यशः श्रेयोऽर्थिभिर्नृभिः ।
कार्यः सदा सदाचारो लभ्येते लघु ते यत ॥३०॥
सुमनोगतमाख्याय मयीत्युपरते सति ।
सस्मित स ततोऽवोचल्लक्ष्मण. सुविचक्षणः ॥३१॥

नृभिर्विपश्चिता वाच्या न पुरः प्रचुरा गिर. ।
कथ्यतेऽदस्ततस्तथ्यं सत्क्षेपेण मया वचः ॥३२॥
भवन्मानसज काव्यवारिजं निजकर्णयोः ।
वतसीकर्तुमिच्छामि विधेयस्तदनुग्रहः ॥३३॥

साहाय्य स्वामिभक्तानां शारदा वो विधास्यति ।
काव्यसिद्धौ सता सैव मातेव हितकारिणी ॥३४॥
तस्येत्यावश्यक वाक्यं निशम्याऽह स्वमानसे ।
वाग्देवीं प्रणमस्तस्याः प्रसादायेत्यचिंतयं ॥३५॥

वाढमर्हति मे भक्तिर्वाग्देवी तन्मुखोद्भवा ।
काव्य मे कुर्वतः किन्न सा सहायी भविष्यति ॥३६॥
कुर्वे मदोऽपि तत्काव्यमह शोचामि किं बहुः ।
सहाय सबल प्राप्य किं न हीनोपि वल्गति ॥३७॥

काव्यसस्कारकर्तारः सति वा गुरवो मम ।
ज्ञाततद्धेतवः सतश्चिन्तया मम किं तया ॥३८॥
निश्चित्येति क्षणं पश्चादिति चिंतामुपागमं ।
विचित्रा रुचयः पुंसामनुशास्मि तदत्र किं ॥३६॥

इच्छत्याक्षेपिणीं श्रोतुं केचिद्विक्षेपिणीं परे ।
संवेगिनीं कथां केचित्परे निर्वेदिनीं जनाः ॥४०॥
केचिद्धर्म्मार्थिनः केचिदर्थकामार्थिनोऽङ्गिनः ।
मुमुक्षवोऽन्ये तत्सर्वान्के रंजयितुमीशते ॥४१॥
प्रायः सर्व्वप्रिय यद्वा पुरुषार्थानुशासनं ।
कुर्वेऽहं तत्तथा स्वस्मिन् जिते रंजितं जगत् ॥४२॥
इति स्वगतमालोच्य शास्त्रमन्वर्थसंज्ञकं ।
मया प्रसूयते नाम्ना पुरुषार्थानुशासनम् ॥४३॥
पुरुषार्थश्चतुर्वर्गं उपदेशोऽनुशासनं ।
चतुर्वर्गश्च धर्मोऽर्थ-काम-मोक्षः प्रकीर्तितः ॥४४॥
चतुर्वर्गोपि मानुष्यैः कैश्चिदद्भुतचेष्टितैः ।
प्राप्य कालादिसामग्रीं साध्यते कृतसत्क्रियैः ॥४५॥
विना मोक्षं चतुर्वर्गस्त्रिवर्गः सद्भिरुच्यते ।
स एव साध्यते कैश्चिदलब्ध्वाऽखिललब्धिभिः ॥४६॥
जन्मसाफल्यकृत्पुसा स्यात्त्रिवर्गोपि साधितः ।
परस्पराविरोधेन सुखश्रेयस्करो यतः ॥४७॥
विरोधयेन्न वा धर्म्मं साधयन्शुद्धधीः परौ ।
परौ तु साधयन्धर्म्मं न हि जातु विरोधयेत् ॥४८॥
नृणा विरोधितावर्थकामौ किं किल कुर्व्वतः ।
धर्मस्तु हंति तावत्रामुत्र चेत्तद्विरोधितः ॥४९॥
धर्मादेव प्रसूयेते अर्थकामौ नृणामिह ।
सम्यत्क्त्वादिव सुज्ञानचरित्रे सुखसाधने ॥५०॥
एक एव क्षमो धर्म्मः सर्वकल्याण-योजने ।
एक एव न किं भानुरलं सर्वार्थदर्शने ॥५१॥
उत्कल्लोपि वारीशिर्बाहुभ्यां जातु तीर्यते ।
न सर्वं धर्ममाहात्म्यं वक्तुं केनापि पार्यते ॥५२॥

त्रिवर्गसाधने तस्माद्धर्ममुख्यतया नृभिः ।
यतितव्य सदा जन्मसाफल्यं नेतुमात्मन. ॥५३॥
दुराप प्राप्य मानुष्यं यैस्त्रिवर्गो न साधितः ।
केवल नेह लोकस्तैः परलोकोऽपि बाधितः ॥५४॥
विना त्रिवर्गसंसिद्धया मानुषस्य पशोरपि ।
केवल खुरशृङ्गादिकृतो भेदोऽभिवेदितः ॥५५॥
मानुष्येऽपि न यः स्वार्थसाधनायोद्यतोऽधमः ।
त तिरश्चा गतिं काञ्चित्प्राप्तं को बोधयिष्यति ॥५६॥
स्वार्थसिद्धिर्भवेद्यत्र तिर्यक्त्वमपि तद्वरं ।
मानुष्यमपि तन्निंद्य स्वार्थभ्रंशो भवेद्यतः ॥५७॥
यथाऽनर्थकमासत्वं विनाऽनन्तचतुष्टय ।
पुरुषार्थैर्विना नृणा पुरुषत्वं तथा वृथा ॥५८॥
पुमर्थसाधनोपायमवबुध्य ततः सुधीः ।
साधयेत्तं तथा नृत्वं कृतार्थं जायते यथा ॥५९॥
इति कतिचिदुदीर्याऽनिंद्यपद्यानि लोक-
द्वितयगतसुखार्थी श्रोतृशुश्रूषुतायै ।
जिनपतिमतसूत्रात् कथ्यतेऽथाप्त्युपायः
कृतसकलसमृद्धेः सच्चतुर्वर्गसिद्धेः ॥६०॥

इति पडितश्रीगोविन्द-विरचिते पुरुषार्थानुशासने कायस्थमाथुर-वंशाऽवतंस-श्रीलक्ष्मणनामाकिते कथामुखाऽभिधानोऽय प्रथमोऽवसरः परः ॥१॥ अत्राशीर्वादः —

भोगींद्रो भोगिवर्गैः कथमपि विदितः प्रस्फुरद्भोगरत्नै-
श्चन्द्रोर्केनोडुवृन्दैरपि सुरनिकरैर्दृक्सहस्रेण चेन्द्रः ।
कीर्त्या यस्य त्रिलोक्यामिव सुरसरिताश्चेतितताया स्वसंगा-
च्छ्रीमान्सोऽमर्त्यसिंहश्चिरमुरुचरितो नन्दतान्नंदनाभ्या ॥१०॥

( इसी तरह हर एक अगले अध्यायके शुरूमें भी आशीर्वादात्मक-पद्य दिये हैं जिनमें प्रायः 'लक्ष्मण'को आशीर्वाद देते हुए उसके गुणोंका भी कुछ वर्णन किया है । )

अन्तभागः—

श्रीसद्विहास' कुमुदाऽखिलाशास्तमोविनाशः सुपथप्रकाशः ।
यत्रोदितेऽत्र प्रभवन्ति लोके नमाम्यहं श्रीजिनभास्करं ते ॥१॥
दोषाऽप्रकाशः कमलाऽवकाशस्तापस्य नाशः प्रसरश्च भासः ।
यत्र प्रसन्नेऽत्र जने भवति श्रीमज्जिनेन्द्रं तमहं नमामि ॥२॥
कुर्वंतु धीकैरविणीसमृद्धिं विवेकवार्द्धेश्च जनेऽत्र वृद्धिं ।
श्रीमूलसंघाकर-चन्द्रपादा भट्टारकश्रीजिनचन्द्रपादाः ॥३॥

विमलसदमलकाष्ठासंघपट्टोदयाऽद्रावुदितउरुवचोंशुध्वस्तदोषाधकारः ।
बुधजनजलजानामुद्विलासं ददाना जयति मलयकीर्तिर्भानुसाम्यं दधानः॥४॥

काष्ठासंघेऽनघयतिभिर्यं कान्तो भात्याकाशे स्फुरदुडुभिर्वा चन्द्रः ।
सत्प्रज्ञाना भवति न केषां तुल्यः कीर्त्याऽचारः स कमलकीर्त्याचार्यः ॥५॥

परे च परमाचारा जिनसंघमुनीश्वराः ।
प्रसन्नमेतत्कुर्वंतु मयि सर्वेपि मानस ॥६॥

कायस्थानामस्त्यथो माथुराणां वंशो लब्ध्वाऽमर्त्यससत्प्रशंसः ।
तत्रापि श्रीखेतलो बन्धुलोकैः खे तारौघैरुत्प्रकाशं शशीव ॥७॥

सुरगिरिरिव धीरो वारिधिर्वा गभीरो विधुरिव हततापः सूर्यवत्सुप्रतापः ।
नरपतिरिव मान्यः कर्णधन्यो वदान्यः समजनि रतिपालस्तत्सुतः साऽरिकालः॥८॥

दुःशासनाऽपायपरो नराग्रणीः सदोद्यतो धर्मसुतार्थसाधने ।
ततः सुतोऽभूत्स गदाधरोपि यो न भीमतां क्वापि दधौ सुदर्शनः ॥९॥

स तस्मात्सत्पुत्रो जनितजनितासयदजनि
क्षितौ ख्यातः श्रीमानमरहरिरित्यस्तकुनयः ।

गुणा यस्मिंस्ते श्री-नय-विनय-तेजःप्रभृतय
समस्ता ये न्यस्ता अपि न सुलभाः क्वाऽपि परतः ॥१०॥
महम्मदेशेन महामहीभुजा निजाधिकारिष्वखिलेष्वपीह यः ।
सम्मान्य नीतोपि सुधीः प्रधानता न गर्वमप्यल्पमधत्त सत्तमः ॥११॥
सर्वैरहंपूर्विकया गुणैर्वृ‍ंत निरीक्ष्य दोषा निखिला यमत्यजन् ।
स्थाने हि तद्भूरिभिराश्रितेऽरिभिः स्थाने वसंतीह जना न केचन ॥१२॥
श्रुतज्ञताये विनयेन धीमता तया नयस्तेन च येन संपदा ।
तया च धर्मो गुणवन्नियुक्तया सुखकर तेन समस्तमीहितं ॥१३॥
सत्योक्तित्वमजातशत्रुरखिलक्ष्मोद्धारसारं नयं
रामः काममुदाररूपममलं शील च गगांगजः ।
कर्णश्चारुवदान्यता चतुरता भोजश्च यस्मायिति
स्व स्वं पूर्वनृपा वितीर्य्य सुगुणा लोकेऽत्र जग्मुः परं ॥१४॥
धन धनार्थिनो यस्मान्मानं मानार्थिनो जनाः ।
प्राप्यासन् सुखिनः सर्वे तद्द्वय तद्द्वयार्थिनः ॥१५॥
निशीनोः कौमुदस्येष्टो नाब्जानामन्यथा रवेः ।
यस्योदयस्तु सर्वेषा सर्वदैवेह वल्लभः ॥१६॥
स्त्रीकुलीनाऽकुलीना श्रीः स्थिरा धीः कीर्तिरस्थिरा ।
यत्र चित्र विरोधिन्योऽप्यऽमूर्तेनुः सहस्थिर्ति ॥१७॥
तस्यानेकगुणस्य शस्यधिष्णस्याऽमर्त्यसिंहस्य स ।
ख्यातः सूनुरभूत्प्रतापवसति श्रीलक्ष्मणाख्यः क्षितौ ।
यो वीक्ष्येति वितर्क्यते सुकविभिर्नीत्वा तनु मानवीं
धर्मोऽय नु नयोऽथवाऽथ विनयः प्राप्तः प्रजापुण्यतः ॥१८॥
यशो यैर्ल्लक्ष्मणस्यैणलक्ष्मणाऽत्रोपमीयते ।
शंके न तत्र तैः साक्षाच्चिलाक्षैर्लक्ष्मलक्षितं ॥१९॥
श्रीमान्सुमित्रोन्नतिहेतुजन्मा सल्लक्षणः सन्नपि लक्ष्मणाख्यः ।
रामातिरिक्तो न कदाचनासीदधाच्च यो रावणसोदरत्वं ॥२०॥

स नयविनयोपेतैर्वाक्यैर्मुहुः कविमानसं
सुकृतसुकृताऽपेक्षो दक्षो विधाय समुद्यतं।
श्रवणयुगलस्यात्मीयस्यावतंसकृते कृती-
स्तु विशदमिदं शास्त्राम्भोजं सुबुद्धिरकारयत् ॥२१॥

अथास्त्यग्रोतकाना सा पृथ्वी पृथ्वीव संततिः।
सच्छायाः सफलाः यस्या जायंते नरभूरुहाः ॥२२॥

गोत्रं गार्ग्यमलंचकार यं इह श्रीचन्द्रमाश्चन्द्रमो
विम्बास्यस्तनयोऽस्य धीर इति तत्पुत्रश्च हींगाऽभिधः।
दोहे लब्धनिजोद्भवेन सुधियः पद्मश्रियस्तत्स्त्रियो
नव्यं काव्यमिदं व्यधायि कविनाऽर्हत्पादपद्मालिना ॥२३॥

पाढादिवर्णसज्ञेनेति शेषः॥

शब्दार्थोभयदुष्टं यद्व्यधाय्यत्र मया पदं।
सद्भिस्ततस्तदुत्सार्य्यं निधेयं तत्र सुन्दरं ॥२४॥

जीयाच्छ्रीजिनशासनं सुमतयः स्युः क्ष्माभुजोर्हन्नता-
स्सर्वोप्यस्तु निरामयः सुखमयो लोकः सुभिक्ष्यादिभिः।
संतः सन्तु चिरायुषोऽमलधियो विज्ञातकाव्यश्रमाः
शास्त्रं चेदममी पठन्तु सततं यावत्त्रिलोकीस्थितिः ॥२५॥

यदेतच्छास्त्रनिर्माणे मयात्यल्पधिया कृतं।
क्षंतव्यमपरागैर्मे तदागः सर्वसाधुभिः ॥२६॥

इति प्रशस्तिः॥ समाप्तं चेद पुरुषार्थानुशासननाम शास्त्रमिति॥

[ बम्बई ऐ० प० स० भ० प्रति

नोट—यह ग्रन्थप्रति अच्छी साफ और शुद्ध लिखी हुई है और किसी किसी स्थानपर टिप्पणको भी लिये हुए है।

## ६०. नागकुमार-चरित ( मल्लिषेण सूरि )

**आदिभाग :—**

श्रीनेमिं जिनमानम्य सर्वसत्वहितप्रदम् ।
वक्ष्ये नागकुमारस्य चरितं दुरितापहं ॥१॥
कविभिर्जयदेवाद्यैर्गद्यैपद्यैर्विनिर्मितम् ।
यत्तदेवास्ति चेदत्र विषम मन्दमेधसाम् ॥२॥
प्रसिद्धैः संस्कृतैर्वाक्यैर्विद्वज्जन-मनोहरम् ।
तन्मया पद्यबन्धेन मल्लिषेणेन रच्यते ॥३॥

**अन्तभाग :—**

श्रुत्वा नागकुमार-चारुचरित श्रीगौतमेनोदितं ।
भव्याना सुखदायक भवहर पुण्यास्रवोत्पादकं ।
नत्वा तं मगधाधिपो गणधरं भक्त्या पुर प्रागम-
च्छ्रीमद्राजगृह पुरंदरपुराकार विभूत्या सम ॥६१॥

इत्युभयभाषाकविचक्रवर्ति-श्रीमल्लिषेणसूरि-विरचिताया श्रीनागकुमार-पचमीकथाया नागकुमार-मुनीश्वर-निर्वाणगमनो नाम पंचमः सर्गः ।

* जितकषायरिपुर्गुणवारिधिर्नियतचारुचरित्रतपोनिधिः ।
जयतु भूपतिरीटविघट्टितक्रमयुगोऽजितसेनमुनीश्वरः ॥१॥
अजनि तस्य मुनेर्वरदीक्षितो विगतमानमदो दुरितातकः ।
कनकसेनमुनिर्मुनिपुगवो वरचरित्रमहाव्रतपालकः ॥२॥
गतमदोऽजनि तस्य महामुने' प्रथितवान् जिनसेनमुनीश्वरः ।
सकलशिष्यवरो हतमन्मथो भवमहोदधितारतर[ड]कः ॥३॥
तस्याऽनुजश्चारुचरित्रवृत्तिः प्रख्यातकीर्तिर्भुवि पुण्यमूर्ति. ।
नरेन्द्रसेनो जितवादिसेनो विज्ञाततत्त्वो जितकामसूत्रः ॥४॥
तच्छिष्यो विबुधाग्रणीर्गुणनिधिः श्रीमल्लिषेणाह्वय
संजातः सकलागमेषु निपुणो वाग्देवतालकृतः ।

तेनैषा कविचक्रिणा विरचिता श्रीपंचमीसत्कथा
भव्याना दुरितौघनाशनकरी संसारविच्छेदिनी ॥५॥
स्पष्ट श्रीकविचक्रवर्त्तिगणिना भव्याब्जधर्मांशुना
ग्रथी पंचशती मया विरचिता विद्वज्जनानां प्रिया ।
ता भक्त्या विलिखंति चारुवचनैर्व्याविर्णयंत्यादरा
ये शृण्वंति मुदा सदा सहृदयास्ते याति मुक्तिश्रियं ॥६॥*

इति नागकुमारचरित्रं समाप्तम् ।

## ६१. ज्वालिनीकल्प (इन्द्रनन्दियोगीन्द्र)

**आदिभाग :—**

चन्द्रप्रभजिननाथं चन्द्रप्रभमिन्द्रनंदिमहिमानम् ।
ज्वालामालिन्यर्चित-चरणसरोजद्वयं वंदे ॥१॥
कुमुददलधवलगात्रा महिषमहावाहनोज्ज्वलाभरणा ।
मा पातु वन्हिदेवी ज्वालामालाकरालांगी ॥२॥
जयताद्देवी ज्वालामालिन्युद्यत्त्रिशूल-पाश-झष-
कोदण्ड-काण्ड-फल-वरद-चक्रचिन्होज्वलाऽष्टभुजा ॥३॥
अर्हत्सिद्धाचार्योपाध्यायान् सकलसाधुमुनिमुख्यान् ।
प्रणिपत्य मुहुर्मुहुरपि वक्ष्येऽहं ज्वालिनीकल्पं ॥४॥
दक्षिणदेशे मलये हेमग्रामे मुनिर्महात्मासीत् ।
हेलाचार्यो नाम्ना द्रविडगणाधीश्वरो धीमान् ॥५॥
तच्छिष्या कमलश्रीः श्रुतदेवी वा समस्तशास्त्रज्ञा ।
सा ब्रह्मराक्षसेन गृहिता रौद्रेण कर्मवशात् ॥६॥

---

*—* इन चिन्होंके अन्तर्गत यह षट्पद्यात्मक अन्तका भाग 'आरा-जैनसिद्धान्तभवन'की ताडपत्रीय दो प्रतियों परसे लिया गया है, अन्य कितनी ही प्रतियोंमें यह नहीं पाया जाता—छूटा हुआ है ।

रोदिति हाहाकारैः स्फुटाऽट्टहास करोति सन्ध्याया ।
जपति पठत्यथ वेदान् हसति पुनः कहकह-ध्वनिना ॥७॥
क्वोसावास्ते मंत्री यो मोचयति स्वमंत्रशक्त्या मा ।
वक्तीति सावलेपं सविकारं जृम्भण कुरुते ॥८॥
दृष्ट्वा तामतिदुष्टग्रहेण परिपीडिता मुनीन्द्रोऽसौ ।
व्याकुलितोऽभूत्तत्प्रतिविधानकर्तव्यतामूढ ॥६॥
तद्ग्रहविमोक्षणार्थे तद्ग्रामसमीपनीलगिरिशिखरे ।
विधिनैव वन्हिदेवीं स साधयामास मुनिमुख्यः ॥१०॥
दिनसप्तकेन देव्या प्रत्यक्षीभूतया पुरः स्थितया ।
मुनिरुक्तः किं कार्यं तवार्य वद मुनिरुवाचेत्थम् ॥११॥
कामार्थाद्यैहिक-फलसिद्ध्यर्थं देवि नोपरुद्धासि ।
किन्तु मया कमलश्री-ग्रह-मोक्षायोपरुद्धासि ॥१२॥
तस्माद् ग्रहमोक्षं कुरु देव्येतावदेव मम कार्यं ।
तद्वचन श्रुत्वा सा बभाण तदिद कियन्मात्रम् ॥१३॥
मा मनसि कृथाः खेदं मंत्रेणानेन मोचयेत्युक्त्या ।
मृदुतरमायसपत्र विलिखितमंत्रं ददौ तस्मै ॥१४॥
तन्मत्रविधिमजानन् पुनरपि मुनिपो बभाण ता देवीं ।
नास्मिन् वेद्मि किमप्यहमतो विवृत्यै तदभिधेहि ॥१५॥
तस्मै तया ततस्तद्व्याख्यातं सोपदेशमयतत्त्वं ।
पुनरपि तद्भक्ति-वशाद्ददायि तत्सिद्धविद्येत्थम् ॥१६॥
साधनविधिना यस्मै त्व दास्यसि होमजपविहीनोऽपि ।
भविता स सिद्धविद्यो नो दास्यसि यस्य सोऽत्र पुनः ॥१७॥
उद्यानवने रम्ये जिनभवने निम्नगातटे पुलिने ।
गिरिशिखरेऽन्यस्मिन् वा स्थित्वा निर्जन्तुके देशे ॥१८॥
हृदयोपहृदयमत्र प्रजाप्य नियुत तथा युतं हुत्वा ।
प्रकरोतु पूर्वसेवा प्रयोगयोग्यैर्वं स्वधाम गता ॥१६॥

तत्र स्थित एव ततस्तमसौ दंदह्यमानमाध्याय ।
दहनाक्षरै रुदन्तं दुष्टं निर्द्धाटयामास ॥२०॥
निर्द्धाटितो ग्रहश्चेद् ध्यात्वैकं भूतदहनररररबीज ।
शेषदशनिग्रहाणां किमस्त्यसाध्यो ग्रहः कोऽपि ॥२१॥
देव्यादेशाच्छास्त्रं तेन पुनर्ज्वालिनीमतं रचितम् ।
तच्छिष्यो गांगमुनिर्नीलग्रीवो बीजावाख्यः ॥२२॥
आर्या क्षांतिरसब्बा विरुवट्टः क्षुल्लकस्तथेत्यनया ।
गुरुपरिपाट्याविच्छिन्नसम्प्रदायेन चागच्छत् ॥२३॥॥
कन्दर्पेण ज्ञातं तेनापि स्वसुतनिर्विशेषाय ।
गुणनंदिश्रीमुनये व्याख्यातं सोपदेशं तत् ॥२४॥
पार्श्वे तयोर्द्वयोरपि तच्छास्त्रं ग्रंथतोऽर्थतश्चापि ।
मुनिनेन्द्रनन्दिनाम्ना सम्यग्गदितं विशेषेण ॥२५॥
क्लिष्टग्रंथं प्राक्तनशास्त्रं तदिति स(स्व)चेतसि निधाय ।
तेनेन्द्रनन्दिमुनिना ललितार्यावृत्तगीताद्यैः ॥२६॥
हेलाचार्योक्तार्थं ग्रंथपरावर्तनेन रचितमिदं ।
सकलजगदेकविस्मयजनन जनहितकर शृणुत ॥२७॥
मंत्रि-ग्रह-सन्मुद्रा-मण्डल-कटुतैल-वश्ययंत्र-सुतंत्रं ।
स्नपनविधिर्नीराजनविधिरथ साधनविधिश्चेति ॥२८॥
अधिकाराणामेषां दशभेदाना स्वरूपनिर्देशं ।
वक्ष्येऽहं सक्षेपात् प्रकटं देव्या यथोद्दिष्टम् ॥२९॥
मौनी नियमितचित्तो मेधावी बीजधारणसमर्थः ।
मायामदनमदोनः सिद्ध्यति मंत्री न संदेहः ॥३०॥
सम्यग्दर्शनशुद्धो देव्यर्चनतत्परो व्रतसमेतः ।
मंत्रजपहोमनिरतोऽनालस्यो जायते मंत्री ॥३१॥
देवगुरुसमयभक्तः सविकल्पः सत्यवाग्विदग्धश्च ।
वाक्पटुरपगतशंकः शुचिरार्द्रमना भवेन्मंत्री ॥३२॥

देव्याः पदयुगभक्तो हेलाचार्यक्रमाब्जभक्तियुतः ।
स्वगुरूपदेशमार्गेण वर्तते यः स मन्त्री स्यात ॥३३॥
विद्यागुरुभक्तियुते तुष्टिं पुष्टिं ददाति खलु देवी ।
विद्यागुरुभक्तिवियुक्तचेतसे द्वेष्टि नितरां सा ॥३४॥
सम्यग्दर्शनदूरो वाक्कठश्छान्दसो भयसमेतः ।
शून्यहृदयः सलज्ज. शास्त्रेऽस्मिन् नो भवेन्मत्री ॥३५॥

इति हेलाचार्यप्रणीतार्थे श्रीमदिन्द्रनन्दियोगीन्द्र-विरचित-ग्रंथसदर्भे ज्वालिनीमते मंत्रिलक्षणनिरूपणाधिकारः प्रथमः ॥

**अन्तभाग —**

द्रविडगणसमयमुख्यो जिनपतिमार्गोचितक्रियापूर्णः ।
व्रतसमितिगुप्तिगुप्तो हेलाचार्यो मुनिर्जयति ॥१६॥
यावत् क्षितिजलधिशशाकाम्बरतारकाकुलाचलास्तावत् ।
हेलाचार्योक्तार्थः स्थेयाच्छ्रीज्वालिनीकल्पः ॥२०॥

इति हेलाचार्यप्रणीतार्थे श्रीमदिन्द्रनन्दियोगीन्द्रविरचितग्रंथसन्दर्भे ज्वालिनीमते साधनविधिर्दशमः परिच्छेदः ॥

आसीदिन्द्रादिदेवस्तुतपदकमलश्रीन्द्रनन्दिर्मुनीन्द्रो
नित्योत्सर्प्पच्चरित्रो जिनमतजलधिर्धौतपापोपलेपः ।
प्रज्ञानावामलोघप्रगुणगणभृतोत्कीर्णविस्तीर्णसिद्धा-
न्ताम्भोराशिस्त्रिलोक्याबुजवनविचरत्सद्यशोराजहंसः ॥१॥
यद्वृत्तं दुरितारिसैन्यहनने चण्डासिधारायितम्
चित्तं यस्य शरत्सरसलिलवत् स्वच्छं सदा शीतलं ।
कीर्तिः शारदकौमुदी शशिभृतो ज्योत्स्नेव यस्याऽमला
स श्रीवासवनंदिसन्मुनिपतिः शिष्यस्तदीयो भवेत् ॥२॥
शिष्यस्तस्य महात्मा चतुरनियोगेषु चतुरमतिविभवः ।
श्रीवप्पनंदिगुरुरिति बुधमधुपनिषेवितपदाब्जः ॥३॥

लोके यस्य प्रसादादजनि मुनिजनस्तत्पुराणार्थवेदी
यस्याशास्तंभमूर्धान्यतिविमलयशः श्रीवितानो निबद्धः ।
कालास्तायेन पौराणिककविवृषभा द्योतितास्तत्पुराण-
व्याख्यानाद्बप्पनंदिप्रथितगुणगणास्तस्य किं वर्ण्यतेऽत्र ॥४॥
शिष्यस्तस्येन्द्रनंदिर्विमलगुणगणोद्दामधामाभिरामः
प्रज्ञा-तीक्ष्णास्त्रधारा-विदलितबहलाऽज्ञानवल्लीवितानः ।
जैने सिद्धान्तवार्धौ विमलितहृदयस्तेन सद्ग्रथतोय(ग्रंथतोऽयं)
हेलाचार्योदितार्थो व्यरचि निरूपमो ज्वालिनीमंत्रवादः ॥५॥
अष्टशतस्यैकषष्ठि(८६१)प्रमाणशकवत्सरेष्वतीतेषु ।
श्रीमान्यखेटकटके पर्वण्यक्ष[य]तृतीयायाम् ॥६॥
शतदलसहितचतुःशतपरिमाणग्रथरचनया युक्त ।
श्रीकृष्णराजराज्ये समाप्तमेतन्मतं देव्याः ॥७॥

(नोट—अन्तका पद्य बम्बई सरस्वतीभवनकी प्रतिमें न होकर कारजा-की प्रतिमें पाया जाता है ।)

## ६२. स्वर्णाचलमाहात्म्य ( दीक्षित देवदत्त )

**आदिभाग :—**

श्रीमोक्षसिद्धि-समवाप्ति-निदानमेक शैलान्वयाम्बुजवन-प्रतिबोध-भानुं ।
ध्यानात्समस्तकलुषाबुधिकुंभजातं वदे सुवर्णमयमुच्चसुवर्णशैलं ॥१॥

**अन्तभाग :—**

श्रीमच्छ्रीमूलसघेऽस्मिन् बलात्कारगणे तथा ।
कुन्दकुन्दाभिधाचार्यान्वये विश्वप्रदीपिते ॥४३॥
नन्द्याम्नाये बभूव श्रीभट्टारकपदस्थितः ।
जगद्भूषणदेवोऽभूज्जगद्भूषणमर्थतः ॥४४॥
यस्य वागमला नूनं धर्मशास्त्र-प्रकाशिका ।
गगेव पठता नून पुनाति मुखपकज ॥४५॥

भट्टारकोऽभूत्तत्पट्टे विश्वभूषणनामभृत् ।
सोऽपि विद्यावता श्रेष्ठो विद्यावद्भिर्निषेवितः ॥४६॥
तत्पट्टदीपकः श्रीमानभूद् देवेन्द्रभूषणः ।
सोऽपि भट्टारको ज्ञेयो भट्टारकगुणैर्युतः ॥४७॥
सुरेन्द्रभूषणस्तद्वत्तत्पट्टे समशोभयत् ।
भट्टारकपदस्थायी सदा धर्मोपदेशकृत् ॥४८॥
एषा(षु) भट्टारको योऽभूद्विश्वभूषणसंज्ञकः ।
तच्छिष्यो ब्रह्मपदवी-स्थितो विनयसागरः ॥४६॥
तद्वदेव समाख्यातस्तच्छिष्यो हर्षसागरः ।
एतस्यैव गुरूभूतः पंडितो हरिकृष्णकः ॥५०॥
जीवनादिपदस्तस्य शिष्यो राम इति श्रुतः ।
तच्छिष्यः पंडितो हेमराजोऽभूद्बुद्धिमान् किल ॥५१॥
एषा मध्ये सूरिपुरे विश्वविख्यातसद्गुणे ।
पुण्यक्षेत्रे दर्शनाच्च वदनाद्वा स्वतोऽथवा ॥५२॥
पूर्वोपार्जित-पापौघ-महासंहारकारिणी ।
श्रीनेमिनाथ-जनुषो भूमिभूते शुभावहे ॥५३॥
प्रतीचीसुखकालिंदी-प्रवाहपरिशोभिते ।
द्विजादिवर्ण-वसति-प्रदीप्ते क्षेत्रभूमिपे ॥५४॥
श्रीब्रह्महर्षसिंधोश्च तनूजो धर्मवित्तमः ।
जिनेन्द्रभूषणः श्रीमद्भट्टारकपदे स्थितः ॥५५॥
ज्ञानवान् गुणवांस्तद्वद्दयावानतिपुण्यवान् ।
विराजते सदाभव्यजनैः सपरिवारित. ॥५६॥
कालिंदीकूलबहुधावित्तव्ययबलात्किल ।
निर्माप्य चैत्यभवनं स्थितः सद्धर्मसंमुखः ॥५७॥
तदाज्ञया ह्यटेरस्थ-देवदत्त-कवीशिना ।
कान्यकुब्जकुलोद्भूत-दीक्षितेन सुबुद्धिना ॥५८॥

दयापरेण हिंसादिरहितेन हृदापि वै ।
जैनशासन-प्रामाण्य-करणोन्मुख-भाविना ॥५६॥
श्रीस्वर्णाचल-माहात्म्यं यथावद्रचितं मया ।
पठनीयं भव्यजीवैः श्रोतव्यं भक्तिभावतः ॥६०॥
सद्बुद्धिर्नवसत्पुराणकृतये काव्यंकरेषु स्थितः ।
श्रीमान्सैष जिनेन्द्रभूषणयतिर्भूमौ चिरं जीवतात् ॥६४॥
श्रीमज्जिनेन्द्रदेवोऽत्र जिनेन्द्रपरिवारितः ।
जिनेन्द्रभूषण-मनोवाछित कुरुतादृध्रुव ॥६५॥

इत्याचारागे(?) श्रीभगवत्कुन्दकुन्दाचार्यानुक्रमेण श्रीभट्टारकविश्वभूषण-पट्टाभरण-श्रीब्रह्महर्षसागरात्मज-श्रीभट्टारकजिनेन्द्रभूषणोपदेशात् श्रीमद्दीक्षि-देवदत्तकृते श्रीस्वर्णाचलमाहात्म्ये माहात्म्यफलसूचनो नाम षोडशोऽध्यायः ॥१६॥ इति स्वर्णाचलमाहात्म्यं सम्पूर्णं ।

[ देहली-पचायती-मन्दिर प्रति

## ६३. धर्मचक्रपूजा ( बुध वीर )

**आदिभाग :—**

प्रणिपत्य वर्द्धमानं विदिताखिलतत्त्व-संततेर्मानं ।
श्रीधर्मचक्रनाम्नः पूजायाः पीठिका वक्ष्ये ॥१॥

**अन्तभाग :—**

चन्द्रबाणाष्टषष्टाकैः(१५८६ ?) वर्तमानेषु सर्वतः ।
श्रीविक्रमनृपान्नूनं नयविक्रमशालिनः ॥८॥
पौषमासे सिते पक्षे षष्ठींदु-दिननामकैः(के) ।
रुहितासपुरे रम्ये पार्श्वनाथस्य मन्दिरे ॥६॥
तत्रासीद्विदुषा मान्यो पद्मावतिपुराह्वयः ।
सूरिः श्रीजिनदासाख्यः काष्टसंघाब्धिचन्द्रमाः ॥१०॥
तस्योपदेशतो श्रीमानग्रोतकसुवंशजः ।

लोतू-साधु-सुत. शान्तः वीरुनामा बुधः स्मृतः ॥११॥
श्रीधर्मचक्रयत्रस्य पूजां पद्यैर्विरीययन् ( र्व्यरीरचत )।
बृह[त]श्रीसिद्धचक्रस्य तथा नदीश्वरस्य वैः ॥१२॥
ऋषिमडलयत्रस्य पूजापाठ च कारवैः(क)।
श्रीचिन्तामणिपाश्वर्यार्यश्लोकैर्वेधं व्यधादलं ॥१३॥
अग्रवालान्वयः श्रीमान् लसद्गोयलगोत्रकः।
साधारण-सुतः साधुरणमल्लोऽभिनन्दनः ॥१४॥
तदगजः समुत्पन्नो जिनशासनवत्सलः।
चिरंजीव्यालोकेस्मिन् मल्लिदासाऽभिधानतः ॥१५॥
धर्मचक्रस्य सत्पूजा बुधवीरेण निर्म्मिता।
नात्रा(म्ना ?) श्रीरणमल्लस्य संयता नतदा(दता)द्भुवि ॥१६॥
श्रीहेमचन्द्रशिष्येण यत्कृत वीरकेन वैः।
पूजाचतुष्कमालोक्य विस्तार्य तद्रिचक्षणैः ॥१७॥
यावन्मेरुगिरिः शश्वद् यावच्चन्द्रार्कतारकाः।
तावत् श्रीधर्मचक्रस्य सपर्याऽत्र प्रवर्तते(तु ?) ॥१८॥

भव्य' शुद्धमतिः सदैव निरतः सद्दानपुष्टार्घनैः(सद्ध्यानपुण्यार्जने ?)
साक्षाद्धर्मकथा-विचारचतुरस्तत्वार्थवेदी गुणी।
श्रीसाधारणसाधुवशतिलक सम्यकत्वरत्नाकितः
श्रीमान् श्रीरणमल्लसाधुरखिलं सौख्य समालिंगतु ॥१९॥

सार्द्धं अष्टशती (८५०), सख्या ग्रथाग्रस्य बभूव च।
शुद्धश्लोकप्रमाणेन गणिता गणकोत्तमैः ॥२०॥

इति श्रीधर्मचक्रपूजा [बुध वीर] विरचिता साधुसाधारणागज-साधुरण-मल्लनामाकिता समाप्ता।

[ देहली-पचायती मन्दिर प्रति

नोट—यह ग्रन्थ प्रति बेहद अशुद्ध है और रघुनाथ शर्मा नामके किसी अनाडी लेखककी सवत् १६०० की लिखी हुई है।

## ६४. शब्दाम्भोजभास्कर=जैनेंद्र-महान्यास (प्रभाचन्द्राचार्य)

**आदिभाग :—**

श्रीपूज्यपादमकलंकमनंतबोधं
शब्दार्थसशयहरं निखिलेषु बोधं ।
सच्छब्दलक्षणमशेषमतः प्रसिद्ध
वक्ष्ये परिस्फुटमल प्रति(णि ?)पत्य सिद्धं ॥१॥

सविस्तरं यद्गुरुभिः प्रकाशित महामतीनामभिधानलक्षणं ।
मनोहरैः स्वल्पपदैः प्रकाश्यते महद्भिरुपदिष्ट······ ॥२॥

याति सर्वोपि मार्गे··    ·········
तदुक्त-कृतशिक्षश्लाध्यमेतद्धितस्य ।
विमुक्तमखिलज्ञैर्भाषमाणो गणेन्द्रैः
विविक्तमाखिलार्थे श्लाध्येतेऽतो मुनींद्रैः ॥३॥

शब्दानामनुशासनानि निखिलान्याध्यायताहर्निशं
यो यः सारतरो विचारचतुरस्तल्लक्षणाशो गतः ।
त स्वीकृत्य तिलोत्तमेव विदुषा चेतश्चमत्कारक-
सुव्यक्तैरसमैः प्रसन्नवचनैर्न्यास· समारभ्यते ॥४॥

श्रीपूज्यपादस्वामिविनेयाना शब्दसाधुत्वाऽसाधुत्वविवेक-प्रतिपत्यर्थं शब्दलक्षण-प्रणायनं कुर्वाणो निर्विघ्नतः शास्त्रपरिसमाप्त्यादिकफलमभिलष-न्निष्टदेवतास्तुतिविषय नमस्कुर्वन्नाह ॥छ॥ लक्ष्मीरात्यंतकी यस्य इत्यादि ।

**अन्तभाग :—**

त्रिमयं । चतुर्मय निमेयसबंधे आभिहित्यनिमानसंबंधे ता इति ॥छ॥

इति श्रीप्रभाचन्द्रविरचिते शब्दाभोजभास्करे जैनेंद्र-महान्यासे तृतीयाऽध्यायस्य चतुर्थः पादः समाप्तः ॥

सन्मार्ग-प्रतिबोधको बुधजनैः संस्तूयमानो हठा-
दज्ञानाघतमोपहः क्षितितले श्रीपूज्यपादो महान् ।

सार्वः सतत-सन्निसधिनियतः पूर्वापरानुक्रम.
शब्दांभोजदिवाकरोऽस्तु सहसा नः श्रेयसे यं(?)च वै ॥१॥
नमः श्रीवर्द्धमानाय महते देवनन्दिने ।
प्रभाचन्द्राय गुरवे तस्मै चाऽभयनन्दिने ॥२॥

## ९५. प्राकृतशब्दानुशासन, स्वोपज्ञवृत्तिसहित (कवि त्रिविक्रम)

आदिभाग —

श्रीवीर प्राच्याचल-समुदितमखिलप्रकाशकं वन्दे ।
दिव्यध्वनिपटुदीधितिमक्षमक्षरपद्धतिप्राप्त्यै ॥१॥
श्रुतभर्तुरर्हनन्दि-त्रैविद्यमुने. पदाम्बुजभ्रमर ।
श्रीवाणसकुलकमलद्युमणेरादित्यशर्मणः पौत्रः ॥२॥
श्रीमल्लिनाथ-पुत्रो लक्ष्मीगर्भामृताम्बुधिसुधांशु ।
सोमस्य वृत्त-विद्या-धाम्नो भ्राता त्रिविक्रमस्तु कविः ॥३॥
श्रीवीरसेन-जिनसेनार्यादिवचः पयोधिपूरात्कतिचित् ।
प्राकृतपदरत्नानि प्राकृतकृति-सुकृति-भूषणाय चिनोति ॥४॥
अनल्पार्थ-सुखोच्चारश्शब्दसाहित्यजीवितम् ।
स च प्राकृतमेवेति मत सूक्तानुवर्तिनाम् ॥५॥
प्राकृतं तत्समं देश्यं तद्भव चेत्यदस्त्रिधा ।
तत्सम संस्कृतसमं नेय सस्कृतलक्षणात् ॥६॥
देश्यमार्षं च रूढत्वात्स्वतन्त्रत्वाच्च भूयसा ।
लक्ष्म नापेक्षते तस्य सम्प्रदायो हि बोधकः ॥७॥
प्रकृतेस्संस्कृतात्साध्यमानात्सिद्धाच्च यद्भवेत् ।
प्राकृतस्याऽस्य लक्ष्यानुरोधिलक्ष्म प्रचक्ष्महे ॥८॥
प्राकृतपदार्थसार्थप्राप्त्यै निजसूत्रमार्गमनुजिगमिषताम् ।
वृत्तिर्यथार्थसिद्धयै त्रिविक्रमेणागमक्रमेण क्रियते ॥९॥

तत्सम-तद्भव-देश्य-प्राकृतरूपाणि पश्यता विदुषा ।
दर्पणति येयमवनौ वृत्तिस्त्रैविक्रमी जयति ॥१०॥
प्राकृतरूपाणि यथा प्राच्यैराहेमचन्द्रमाचार्यैः ।
विवृतानि तथा तानि प्रतिबिम्बन्तीह सर्वाणि ॥११॥
सिद्धिर्लोकाच्च ॥१॥ ( प्रथमसूत्र )

इति श्रीमदर्हनन्दित्रैविद्यदेवश्रुतधर-श्रीपादप्रसादासादितसमस्तविद्याप्रभाव-श्रीमत्त्रिविक्रमदेवविरचितप्राकृतव्याकरणवृत्तौ प्रथमाध्यायस्य प्रथमः पादः ।

[नोट—इस ग्रन्थमें चार अध्याय हैं और प्रत्येक अध्यायमें पाणिनीय व्याकरणकी तरह चार पाद हैं। यह ग्रन्थ साङ्ग सिद्धशब्दानुशासनके कर्ता हेमचन्द्राचार्यसे बादका और कालिदासके शाकुन्तलादि नाटकत्रयके व्याख्याता काटयवेमसे पहलेका बना हुआ है; क्योंकि इसमें हेमचन्द्रके उक्त ग्रन्थवाक्योंका उल्लेखपूर्वक खण्डन है और काटयवेमके व्याख्या-ग्रन्थोंमें इस ग्रन्थके सूत्रोंका ही प्राकृतविषयमें प्रमाणत्वरूपसे निर्देश पाया जाता है, ऐसा श्रीवेंकटरंगनाथ शर्माने इस ग्रन्थके प्रथम अध्यायकी भूमिकामें प्रकट किया, जो सन् १८९६ में आर्षप्रेस विजिगापट्टमसे छपकर प्रकाशित हुआ है। ग्रन्थका अन्तभाग पासमें न होनेसे नहीं दिया जा सका।]

## ९६. जिनसहस्रनाम-टीका ( अमरकीर्तिसूरि )

अन्तभाग :—

नत्वा जिनसेनाचार्यं विद्यानं[दं] समंतभद्रमर्हत्त ।
श्रीमत्सहस्रनाम्ना ··············च्मि ससिद्धये ॥१॥

अथ श्रीमज्जिनसेनाचार्यः चातुर्वर्ण्यसंघसमुद्धरेण धीरः सकललोक-नरोचनाकांतः(?) खंडितापाखंडिमंडलाहंकारः शुचिवचनवीचीविरचित-चित्तचमत्कारः स्वर्गापवर्गपुरमार्गस्यंदनः चारुचारित्रचमत्कृतसंक्रंदनः सकलजगत्त्रयजातदर्पकंदर्पनिष्कंदनः शुभोपदेशवचनशैत्यगुणावगणित-

हरिचन्दनः श्रीमद्गीर्वाणभाषारचितश्रीमहापुराणः जिनयज्ञादिसकलशास्त्र-प्रवीणः श्रीमद्गुणभद्राचार्यवर्यसेवितपादाभोजः प्रज्ञापुंजः इति विरुदावली विराजमानः जिनमहस्रनामस्तवनं सञ्चिकीर्षु प्रसिद्धाष्टसहस्रेद्धलक्षण-मित्यादिस्वाभिप्रायस[सू]चूनपरः श्लोकमित्याह—

× × × ×

इति सूरिश्रीमदमरकीर्तिविरचिताया जिनसहस्रनामटीकाया प्रथमोध्यायः॥१॥

अन्तभाग :—

अथ प्रशस्तिः। स्वस्तिस्यात्कारकोत्तमाय श्रीमदनेकातशासनाय ।

सद्वृत्तो ··लोकमहितः ·· ·· ·· ···· ·· ···
··· ··· ··· ·· ·· ·· ·· ·· ··य ।
रत्नाना ·· ·· ·· सुमनाः स्याद्वादचंद्रोदयः
साक्षात्सोऽत्र सनातनो विजयते श्रीमूलसंघोदधिः ॥१॥
आसाद्यद्युसदा(?) सहायमसमं गत्वा विदेहं जवा-
दद्राक्षीत् किल केवलेक्षणमिनं द्योतत्तमध्यक्षतः ।
स्वामी साम्यपदादिरूढधिषणः श्रीनदिसंघश्रियो
मान्यः सोऽस्तु शिवाय शातमनसा श्रीकुन्दकुन्दाऽभिधः ॥२॥
श्रीपद्मनदिविद्वन् विख्याता त्रिभुवनेऽपि कीर्त्तिस्ते ।
हारति हीरति हंसति हरति हरोत्तसमनुहरति ॥३॥
श्रीपद्मनंदिपरमातमपरः पवित्रो देवेन्द्रकीर्तिरथ साधुजनाऽभिवंद्यः ।
विद्यादिनंदिवरसूरिरनल्पबोधः श्रीमल्लिभूषण इतोऽस्तु च मगलं मे ॥४॥
प्रायो व्याकरणं येन धातुपाठेऽवतारितं ।
स जीयात् शब्दमाणिक्यनिवासः श्रुतसागरः ॥५॥
मल्लिभूषणशिष्येण भारत्या नदनेन च ।
सहस्रनामटीकेय रचिताऽमरकीर्तिना ॥६॥

इति श्रीसूरिश्रीमदमरकीर्त्तिविरचितायां भट्टारकश्रीविश्वसेनाऽनुमोदिताया संघाभिपति-बुधाचन्द्र-चन्द्रिका जिनसहस्रनामटीका सम्पूर्णा ॥

## ९७. सरस्वती(भारती)कल्प ( मल्लिषेणसूरि )

**आदिभाग :—**

जगदीशजिनं देवमभिवन्द्याभिनन्दनं(शङ्करं) ।
वक्ष्ये सरस्वतीकल्पं समासाद(सेना)ल्पमेधसान्(म्) ॥१॥
अभयज्ञानमुद्राक्षमालापुस्तकधारिणी ।
त्रिनेत्रा पातु मां वाणी जटाबालेन्दुमण्डिता ॥२॥
लब्धवाणीप्रसादेन मल्लिषेणेन सूरिणा ।
रच्यते भारतीकल्पः स्वल्पजाप्य-फलप्रदः ॥३॥

**अन्तभाग :—**

वाक्पतेर्वादिवेतालादभयेन्दोश्च पञ्चलात् ।
श्रीमल्लिषेणयोगींद्रादेशाद्विद्या समागता ॥६५॥
कृतिना मल्लिषेणेन श्रीषेणस्य च सूनुना ।
रचितो भारतीकल्पः शिष्टलोकमनोहरः ॥६६॥
सूर्याचन्द्रमसौ यावन्मेदिनी भूधरार्णवाः ।
तावत्सरस्वतीकल्पः स्थेयाच्चेतसि धीमताम् ॥६७॥

इत्युभयभाषाकविशेखर-श्रीमल्लिषेणसूरिविरचितः श्रीभारतीकल्पः समाप्तः ।

## ९८. कामचाण्डालीकल्प ( मल्लिषेणसूरि )

**आदिभाग :—**

श्रीवीरं जिनमानम्य खंडित-स्मर-सायकम् ।
वक्ष्येऽहं कामचाण्डालीकल्पमिष्टफलप्रदम् ॥१॥
भूषिताभरणैः सर्वैर्मुक्तकेशा निरम्बरा ।
पातु मा कामचाण्डाली कृष्णवर्णा चतुर्भुजा ॥२॥

फलकाचकलशकरा शाल्मलिदण्डोद्धमुरगोपेता ।
जयतात् त्रिभुवनवन्द्या जगति श्रीकामचाण्डाली ॥३॥

विरचयति मन्त्रवादं संक्षेपात्सकलजनहितार्थमिदम् ।
कलिकालोभयभाषा-कविशेखर-मल्लिषेणगणी ॥४॥

साधकदेव्याराधनमशेषजनवश्ययन्त्रतन्त्राणि ।
ज्वालागर्दभभेदः शास्त्रेऽस्मिन् कथ्यते स्पष्टम् ॥५॥

**अन्तभाग :—**

निःशेषागममन्त्रवादकुशलं वाग्देवताऽलंकृतं ।
तन्नत्वा कविशेखरं मुनिवरं श्रीमल्लिषेणाह्वय ॥-
दद्यात्स्वर्णसमन्वितोन्नतघटाद् धाराजलं तत्करे ।
साक्षीकृत्य हुताशनानिलव(प)यश्चन्द्रार्कतारागणान् ॥ आज्ञाप्रक्रमः १

उद्यन्निर्मलकीर्तिपूरितदिशो विज्ञातजैनागमो ।
नाम्ना श्रीजिनसेनसूरिरभवद्भव्याम्बुजाना रविः ॥
तच्छिष्यः कविशेखरोऽजनि मुनि॰ श्रीमल्लिषेणो गणी ।
तेनैव स्वपरोपकारजनकः श्रीमन्त्रवादः कृत' ॥

इत्युभयभाषाकविशेखरश्रीमल्लिषेणसूरि-विरचिते कामचाण्डालीकल्पे ज्वालागर्दभलक्षणाधिकारः पंचमः ।

भाषाद्वय-कविताया कवयो दर्पं वहन्ति तावदिह
नालोकयन्ति यावत्कविशेखर-मल्लिषेणमुनिम् ॥१॥

छन्दोलंकारशास्त्रं किमपि न च परं प्राकृतं संस्कृतं वा
काव्यं तच्च प्रबन्धं सुकविजनमनोरजनं यत्करोति ।
कुर्वन्नुर्वी-शिलादौ न लिखति किल तत्या(ख्या)ति ख्यावत्समाप्तिं
स श्रीमान् मल्लिषेणो जयतु कविपतिर्वाग्वधूमण्डितास्यः ॥२॥

इति कामचाण्डालीकल्पः समाप्तः ।

## ९९. ज्वालिनीकल्प (मल्लिषेणसूरि)

आदिभाग :—

चन्द्रप्रभं जिन नत्वा शरच्चन्द्रसमप्रभम्।
वक्ष्येहं ज्वालिनीकल्पं संकल्पितसमप्रभम् ॥१॥

अन्तभाग :—

श्रीमतोऽजितसेनस्य सूरेः कर्मारिधूरिणः।
शिष्यः कनकसेनोभूद्रणि(णि?)कमुनिजनस्तुतः ॥२॥
तदीयशिष्यो जिनसेनसूरिः तस्याग्रशिष्योऽजनि मल्लिषेणः।
वाग्देवतालक्षितचारुवक्त्रस्तेनारचि [श्री] शिखिदेविकल्पः ॥३॥
कुमतिमतविभेदी जैनतत्त्वार्थवेदी हृतदुरितसमूहः क्षीणसंसारमोहः।
भवजलधितरण्डो वाग्व[रो]वाक्करण्डो विबुधकुमुदचन्द्रो मल्लिषेणो गणीन्द्रः४

इति ज्वालिनीकल्पं समाप्तम्।

## १००. भैरवपद्मावतीकल्प सटीक (मल्लिषेणसूरि)

आदिभाग :—

टी० मं०—श्रीमच्चातुर्णिकायामरखचरवधूनृत्यसंगीतकीर्ति-
व्यामाशामंडलं मंडितसुरपटहाद्यष्टसत्प्रातिहार्यं।
नत्वा श्रीपार्श्वनाथ जितकमठकृतोद्दंडघोरोपसर्गं
पद्मावत्या हि कल्पप्रवरविवरण वक्ष्यते मल्लिषेणैः* ॥१॥

* साराभाई नवाब द्वारा मुद्रित प्रतिमें 'बन्धुषेणै.' पाठ दिया है और उसके द्वारा टीकाको बन्धुषेणकृत सूचित किया है, परन्तु ऐ० प० सरस्वती भवन बम्बईकी प्रतिमें और ला० मनोहरलालजी जौहरी देहलीकी दो प्रतियों में भी 'मल्लिषेणैः' पाठ पाया जाता है और उससे टीकाका स्वोपज्ञ होना जाना जाता है, ग्रन्थकी सन्धियोंमें भी मल्लिषेणका ही नाम है। बन्धुषेणके टीकाकार होनेका उनसे कोई समर्थन नहीं होता। और न अन्तमें ही बन्धु-षेणका टीकाकार-रूपसे कोई नामोल्लेख तथा परिचय उपलब्ध होता है।

मूल मं०—कमठोपसर्गदलन त्रिभुवननाथं प्रणम्य-पार्श्वजिनम् ।
वक्ष्येऽभीष्टफलप्रद-भैरवपद्मावतीकल्पम् ॥१॥
पाशफलवरदगजवशकरणकरा पद्मविष्टरा पद्मा ।
सा मा रक्षतु देवी त्रिलोचना रक्तपुष्पाभा ॥२॥
त्रोतला त्वरिता नित्या त्रिपुरा कामसाधनी ।
देव्या नामानि पद्मायास्तथा त्रिपुरभैरवी ॥३॥
पाशवज्रफलाभोजभृत्करा त्रोतलाह्वया ।
शंखपद्माभया वरदा त्वरिताख्याऽरुणप्रभा ॥४॥
पाशाकुशपयोजातसाक्षमूल(माल)करा वरा ।
हंसवाहाऽरुणा नित्या जटा वालेन्दुमण्डिता ॥५॥
शूल-चक्र-कशाभोज-चाप-वाण-फलाकुशैः ।
राजिताऽष्टभुजा देवी त्रिपुरा कुकुमप्रभा ॥६॥
शंख-पद्म-फलाभोजभृत्करा कामसाधनी ।
बन्धूकपुष्पसंकाशा कुक्कुटोरगवाहना ॥७॥
पाशचक्रधनुर्वाणखेटखड्गफलाम्बुजैः ।
लसद्भुजेन्द्रगोपाभा त्र्यक्षा त्रिपुरभैरवी ॥८॥
आदौ साधकलक्षणं सुसकला देव्यर्चनायाः क्रमं
पश्चाद्द्वादशयंत्रभेदकथन स्तभोऽङ्गनाकर्षणं ।
यंत्र वश्यकरं निमित्तमपरं वश्यौषधं गारुडं
वक्ष्येऽह क्रमशो यथा निगदिताः कल्पेऽधिकारास्तथा ॥९॥
इति दशविद्याधिकारैर्ललितार्याश्लोकगीतिसद्वृत्तैः ।
विरचयति मल्लिषेणः कल्प पद्मावतीदेव्याः ॥१०॥
निर्जितमदनाटोपः प्रशमितकोपो विमुक्तविकथालापः ।
देव्यर्चनानुरक्तो जिनपदभक्तो भवेन्मत्री ॥११॥
मंत्राराधनशूरः पापविदूरो गुणेन गम्भीरः ।
मौनी महाभिमानी मंत्री स्यादीदृशः पुरुषः ॥१२॥

गुरुजनकृतोपदेशो गततंद्रो निद्रया परित्यक्तः
परिमितभोजनशीलः स भवेदाराधको देव्याः

निर्जितविषयकषायो धर्मामृतजनितहर्षगतकायः।
गुरुतरगुणसंपूर्णः स भवेदाराधको देव्याः ॥१४॥

शुचिः प्रसन्नो गुरुदेवभक्तो दृढव्रतः सत्यदयासमेतः।
दक्षः पटुर्बीजपदावधारी मन्त्री भवेदीदृश एव लोके ॥१५॥

एते गुणा यस्य न संति पुंसः क्वचित्कदाचिन्न भवेत्स मंत्री।
करोति चेद्दर्पवशात्स जाप्यं प्राप्नोत्यनर्थं फणिशेखरायाः ॥१६॥

इत्युभयभाषाकविशेखर-श्रीमल्लिषेणसूरिविरचिते भैरवपद्मावतीकल्पे मंत्रिलक्षणनिरूपकः प्रथमोऽधिकारः ॥

**अन्तभाग :—**

सकलनृपमुकुटघटितचरणयुगः श्रीमदजितसेनगणी।
जयतु दुरितापहारी भव्यौघभवार्णवोत्तारी ॥५७॥

जिनसमयागमवेदी गुरुतरसंसारकाननच्छेदी।
कर्मेन्धन-दहनपटुस्तच्छिष्यः कनकसेनगणी ॥५८॥

चारित्रभूषिताङ्गो निःसंगो मथितदुर्जयाऽनंगः।
तच्छिष्यो जिनसेनो बभूव भव्याब्जघर्मांशुः ॥५९॥

तदीयशिष्योऽजनि मल्लिषेणः सरस्वती-लब्धवरप्रसादः।
तेनोदितो भैरवदेवतायाः कल्पः समासेन चतुःशतेन(४००) ॥६०॥

यावद्वार्धि-महीधर-तारागण-गगन-चन्द्र-दिनपतयः।
तिष्ठति तावदास्ता भैरवपद्मावतीकल्पः ॥६१॥

इत्युभयभाषा-कविशेखरश्रीमल्लिषेणसूरिविरचिते भैरवपद्मावतीकल्पे गरुडाधिकारो दशमः ॥

## १०१. महापुराण ( मल्लिषेणसूरि )

आदिभाग :—

..............................।

..............................॥१॥

अन्तभाग :—

तीर्थे श्रीमुलगुन्दनाम्नि नगरे श्रीजैनधर्मालये
स्थित्वा श्रीकविचक्रवर्तियतिप. श्रीमल्लिषेणाह्वय' ।
सक्षेपात्प्रथमानुयोगकथनव्याख्यान्वित शृण्वता
भव्याना दुरितापहं रचितवान्नि'शेषविद्याम्बुधिः ॥१॥
वर्षैकत्रिशताहीने सहस्रे(६६६) शकभूभुजः ।
सर्वजिद्वत्सरे ज्येष्ठे सशुक्ले पंचमीदिने ॥२॥
अनादि तत्समासं तु पुराण दुरितापहम् ।
जीयादाचन्द्रतारार्कं विदग्धजनचेतसि ॥३॥
श्रीजिनसेनसूरितनुजेन कुदृष्टिमतप्रभेदिना
गारुडमन्त्रवादसकलागमलक्षणतर्कवेदिना ।
तेन महापुराणमुदित भुवनत्रयवर्तिकीतिना
प्राकृतसंस्कृतोभयकवित्वधृता कविचक्रवर्तिना ॥

[ विद्वद्रत्नमाला, कोल्हापुर ल० भ० मठ प्रति

## १०२. कर्मकाण्ड-टीका (भ० ज्ञानभूषण व सुमतिकीर्ति)

आदिभाग :—

महावीर प्रणम्यादौ विश्वतत्त्व-प्रकाशकं ।
भाष्यं हि कर्मकाण्डस्य वक्ष्ये भव्यहितकर ॥१॥
विद्यानंदि-सुमल्ल्यादिभूष-लक्ष्मीन्दु-सद्गुरून् ।
वीरेन्दं-ज्ञानभूष हि वदे सुमतिकीर्तियुक् ॥२॥

सिद्धांतपरिज्ञानी चक्रवर्तिश्रीनेमिचन्द्रकविः ग्रंथप्रारम्भपूर्वं ग्रन्थनिर्विघ्न-परिसमाप्त्यादिफलमभिलषन् श्रीइष्टदेवनेमिनाथं नमस्कुर्वन्नाह—

**अन्तभाग :—**

मूलसंघे महासाधुर्लक्ष्मीचन्द्रो यतीश्वरः।
तस्य पट्टे च वीरेन्दुर्विबुधो विश्ववंदितः ॥१॥
तदन्वये दयाम्भोधिर्ज्ञानभूषो गुणाकरः।
टीका हि कर्मकाण्डस्य चक्रे सुमतिकीर्तियुक् ॥२॥
टीका गोम्मटसारस्य विलोक्य विहितध्रुवं।
पठंतु सज्जनाः सर्वे भाष्यमेतन्मनोहरं ॥३॥
प्रमादाद्भ्रमतो वापि यत्रशुद्धं कदाचन।
टीकायामत्र संशोध्य विबुधैर्दोषवर्जितैः ॥४॥

इति श्रीभट्टारकश्रीज्ञानभूषण-विरचिता * कर्मकाण्डग्रंथटीका समाप्ता ॥

[ वीरसेवामन्दिर-प्रति

## १०३. पुण्यास्रव-कथाकोष ( रामचन्द्र मुमुक्षु )

**आदिभाग :—**

श्रीवीरं जिनमानम्य वस्तुतत्त्व-प्रकाशकं।
वक्ष्ये कथामयं ग्रन्थं पुण्यास्रवाभिधानकं ॥१॥

**अन्तभाग :—**

इति पुण्यास्रवाभिधाने ग्रन्थे केशवनन्दिदिव्यमुनिशिष्य-रामचन्द्रमुमुक्षु विरचिते दानफलव्यावर्णनो नाम षोडशवृत्ताः (अधिकाराः) समाप्ताः ॥१६॥

---

* जयपुर और देहलीकी कितनी ही प्रतियोंमें 'ज्ञानभूषणनामांकिता सूरिसुमतिकीर्ति-विरचिता' ऐसा पाठ पाया जाता है, जो ग्रन्थकी दोनों भट्टारकों द्वारा संयुक्त रचना होनेका परिणाम जान पड़ता है। और जिस ग्रन्थको 'कर्मकाण्ड' नाम दिया गया है वह १६० गाथात्मक 'कम्मपयडि' ( कर्मप्रकृति ) नामका गोम्मटसारी प्रकरण है।

यो भव्याब्ज-दिवाकरो यमकरो मारेभपञ्चाननो
नानादुःखविधायि कर्म्मकुभृतो वज्रायते दिव्यधीः ।
यो योगीन्द्र-नरेन्द्र-वन्दितपदो विद्यार्णवोत्तीर्णवान्
ख्यातः केशवनन्दिदेव-यतिपः श्रीकुन्दकुन्दान्वयः ॥१॥

शिष्योऽभूत्तस्य भव्य. सकलजनहितो रामचन्द्रो मुमुक्षु-
र्ज्ञात्वा शब्दापशब्दान् सुविशदयशसः पद्मनन्द्याभिधानात्(ह्वयाद्वै) ।
वन्द्याद्वादीभसिंहात्परमयतिपतेः सो व्य वाद्भव्यहेतो-
र्ग्रन्थं पुण्यास्रवाख्य गिरिसमितिमितं दिव्यपद्यैः कथार्थैः ॥२॥

सार्द्धैश्चतुःसहस्रैर्यो(४५००)मितः पुण्यास्रवाह्वयः ।
ग्रन्थः स्थेयात् सता चित्ते चन्द्रादिवत्सदाम्बरे ॥३॥ *
कुन्दकुन्दान्वये ख्याते ख्यातो देशिगणाग्रणीः ।
अभूत सद्राधिन. श्रीमान्पद्मनन्दी त्रिरात्रिकः ॥४॥

वृषाधिरूढो गणपो गुणोद्यतो विनायकानन्दितचित्तवृत्तिकः ।
उमासमालिङ्गितईश्वरोपमस्ततोप्यभून्माधवनन्दिपण्डितः ॥५॥
सिद्धातशास्त्रार्णवपारदृश्वा मासोपवासी गुणरत्नभूषितः ।
शब्दादिवार्थो(?) विबुधप्रधानो जातस्ततः श्रीवसुनन्दिसूरिः ॥६॥

दिनपतिरिव नित्यं भव्यपद्माब्धिबोधी
सुरगिरिरिव देवैः सर्वदा सेव्यपादः ।
जलनिधिरिव शश्वत् सर्व्वसत्वानुकम्पी
गणभृदर्जान शिष्यो मौलिनामा तदीयः ॥७॥

---

* पचायती मन्दिर देहलीमें इस ग्रन्थकी दो प्रतियाँ हैं—एक सं० १५८४ की लिखी हुई, जिसमें प्रशस्तिके इस * चिन्ह तक कुल तीन ही पद्य हैं, दूसरी सं० १७६६ की लिखी हुई है जिसमें ६ पद्य हैं; परन्तु आदिके उक्त तीन पद्योंको छोड़कर शेष ६ पद्योंमें जो प्रशस्ति है वह एक जुदी तथा अधूरी जान पड़ती है—ग्रन्थकर्ताके साथ उसका सम्बन्ध व्यक्त नहीं होता ।

कलाविलासः परिपूर्णवृत्तो दिगम्बरालंकृतिहेतुभूतः ।
श्रीनन्दिसूरिर्मुनिवृन्दवन्द्यस्तस्मादभूच्चन्द्रसमानकीर्तिः ॥८॥

चार्वाक-बौद्ध-जिन-साङ्ख्य-शिवद्विजाना,
वाग्मित्व-वादि-गमकत्व-कवित्व-वित्तः ।
साहित्य-तर्क-परमागम-भेदभिन्नः,
श्रीनन्दिसूरिगगनाङ्गणपूर्णचन्द्रः ॥९॥

इति समातोऽयं पुण्याश्रवाभिधो ग्रंथः ।

[ देहली पंचायती मन्दिर प्रति

## १०४. प्रा० पंचसंग्रह-टीका (भ० सुमतिकीर्ति)

**आदिभाग :—**

..............................।
.............................. ॥१॥

**अन्तभाग :—**

श्रीमूलसंघेऽजनि नन्दिसंघो वरो बलात्कारगणप्रसिद्धः ।
श्रीकुंदकुदो वरसूरिवर्यो बभौ बुधो भारतिगच्छसारे ॥१॥
तदन्वये देवमुनीन्द्रवंद्यः श्रीपद्मनन्दी जिनधर्म्मनंदी ।
ततो हि जातो दिविजेन्द्रकीर्तिर्विद्या[दि]नंदी वरधर्म्ममूर्तिः ॥२॥
तदीयपट्टे नृपमाननीयो मल्ल्यादिभूषो मुनिवंदनीयः ।
ततो हि जातो वरधर्म्मधर्त्ता लक्ष्म्यादिचन्द्रो बहुशिष्यकर्ता ॥३॥

पंचाचाररतो नित्यं सूरिसद्गुणधारकः ।
लक्ष्मीचद्रगुरुस्वामी भट्टारकशिरोमणिः ॥४॥

दुर्वारदुर्वादिकपर्वताना वज्रायमानो वरवीरचन्द्रः ।
तदन्वये सूरिवरप्रधानो ज्ञानादिभूषो गणिगच्छराजः ॥५॥

त्रैविद्यविद्याधरचक्रवर्ती भट्टारको भूतलयातकीर्तिः ।
ज्ञानादिभूषो वरधर्म्ममूर्तिस्तदीयवाक्यात् कृतसारवृत्तिः ॥६॥

भट्टारको भुवि ख्यातो जीयाच्छ्रीज्ञानभूषणः ।
तस्य पट्टोदये भानुः प्रभाचन्द्रो वचोनिधिः ॥७॥

विशदगुणगरिष्टो ज्ञानभूषो गणीन्द्र-
स्तदनुपदविधाता धर्म्मधर्ता सुभर्त्ता ।
कुवलयसुखकर्त्ता 'मोहमिथ्याघहर्ता
स जयतु यतिनाथः श्रीप्रभाचन्द्रचन्द्रः ॥८॥

दीक्षा-शिक्षा-पदं दत्त लक्ष्मीवीरेन्द्र(न्दु ?)सूरिणा ।
येन मे ज्ञानभूषेण तस्मै श्रीगुरुवेनमः ॥९॥
आगमेन विरुद्धं यद् व्याकरणेन दूषितं ।
शुद्धीकृत च तत्सर्वं गुरुभिर्ज्ञानभूषणैः ॥१०॥

तथापि—

अत्र हीनादिकं किंचिद्रचितं मतिविभ्रमात् ।
शोधयन्तु महाभव्याः कृपा कृत्वा ममोपरि ॥११॥
हसाख्यवर्णिनः येन ग्रन्थोऽयमुपदेशित ।
तस्य प्रसादतो वृत्तिः कृत्वा सुमतिकीर्तिना ॥१२॥

श्रीमद्विक्रमभूपतेः परिमिते वर्षे शते षोडशे ।
विंशत्यग्रगते (१६२०) सिते शुभतरे भाद्रे दशम्या तिथौ ।
ईलाचे वृषभालये वृषकरे सुश्रावके धार्मिके
सूरिश्रीसुमतीशकीर्ति-विहिता टीका सदा नदतु ॥१३॥

इति श्रीपंचसंग्रहाऽपरनामलघुगोम्मट्टसारसिद्धातग्रन्थ - टीकाया कर्म्मकाडे सप्ततिनाम सप्तमोऽधिकारः ॥ इति श्रीलघुगोम्मट्टसारटीका समाप्ता ॥

[ देहली पचायती मन्दिर प्रति

## १०५. रात्रिभोजनत्याग-कथा (ब्रह्म नेमिदत्त)

**आदिभाग :—**

श्रीमज्जिनं जगत्पूज्यं भारतीं भुवनोत्तमाम् ।
नत्वा गुरून्प्रवक्ष्येऽहं रात्रिभोजनवर्जनम् ॥१॥

**अन्तभाग :—**

जिनपतिमुखपद्मात् निर्गता दिव्यभाषा
मुनिपतिशतसेव्या सारतत्त्वप्रकाशा ।
कुमतितिमिरनाशा भानुभेव प्रशस्या
दिशतु मम सुखानि सर्वलोकैकभूषा ॥१॥
श्रीभट्टारकमल्लिभूषणगुरुः सूरिश्रुताब्धिः सुधी-
राचार्यो वरसिंहनन्दी सुगुरुः कुर्यात्सता मगलम् ॥२॥

इति भट्टारकश्रीमल्लिभूषण-शिष्याचार्यश्रीसिंहनन्दिगुरूपदेशेन ब्रह्म-नेमिदत्तविरचिता रात्रिभोजन-परित्यागफलदृष्टान्त-श्रीनागश्रीकथा समाप्ता।

## १०६. नेमिनाथ-पुराण (ब्रह्म नेमिदत्त)

**आदिभाग :—**

श्रीमन्नेमि जिनं नत्वा लोकालोकप्रकाशकम् ।
तत्पुराणमहं वक्ष्ये भव्याना सौख्यदायकम् ॥१॥

**अन्तभाग :—**

गच्छे श्रीमति मूलसंघतिलके सारस्वतीये शुभे
विद्यानन्दगुरुप्रपट्टकमलोल्लासप्रदो भास्करः ।
ज्ञानध्यानरतः प्रसिद्धमहिमा चारित्रचूडामणिः
श्रीभट्टारकमल्लिभूषणगुरुः जीयात्सता भूतले ॥१॥
प्रोद्यत्सम्यक्त्वरत्नो जिनकथितमहासप्तभंगी-तरगैः
कान्तं मिथ्यामलनिकरः(?) क्रोधनक्रादिदूरः ।

श्रीमज्जैनेन्द्रवाक्यामृतविशदरसः श्रीजिनेंद्रप्रवृद्धि
जीयान्मे सूरिवर्यो व्रतनिचयलसत्पुण्यपण्यश्रुताब्धिः ॥२॥

मिथ्यावादान्धकारक्षयकिरणरविः श्रीजिनेंद्राघ्रिपद्म-
द्वन्द्वे निर्द्वंद्वभक्तिर्जिनगदितमहाज्ञानविज्ञानसिन्धुः ।
चारित्रोत्कृष्टभारो भवभयहरणो भव्यलोकैकबन्धु-
र्जीयादाचार्यवर्यो विशदगुणनिधिः सिंहनन्दी मुनीन्द्रः ॥३॥

यस्योपदेशवसिता(शतो) जिनपुंगवस्य नेमे पुराणमतुलं शिवसौख्यकारी ।
चक्रे मयापि तुच्छतमा(?)ऽत्र भक्त्या कुर्यादिमं श्रुततमं मम मंगलानि ॥४॥

(अगले एक पद्यमें नेमिपुराणात्मक आशीर्वाद है।)

इति श्रीत्रिभुवनैकचूडामणिश्रीनेमिजिनपुराणे भट्टारकश्रीमल्लिभूषण-शिष्याचार्यसिंहनंदिनामाङ्किते ब्रह्मनेमिदत्तविरचिते श्रीनेमितीर्थंकर-परमदेव-पंचकल्याणकव्यावर्णनो नाम षोडशोऽधिकारः ॥

## १०७. समवसरणपाठ (पं० रूपचन्द)

**आदिभाग :—**

नमस्कृत्यार्हतः सिद्धान् सूरीन् सत्पाठकान्मुनीन् ।
विदधे केवलज्ञानकल्याणार्च्चां शुभाप्तये ॥१॥

**अन्तभाग :—**

नाभेयभुक्तिरुचिरे कुरुनाम्निदेशे शुद्धे सलेमपुरवाक्पहिरूपसिद्धे ।
अग्रोतकान्वयविभूषणगर्गगोत्रः श्रीमामटस्य तनयो भगवानदासः ॥१॥
तत्पूर्वपत्न्या प्रभवः प्रतापी श्रीब्रह्मदासेति समाप्तवृत्तः ।
द्वितीयचाचो इति सज्ञिकाया पत्न्यां भवाः पञ्चसुताः प्रसिद्धाः ॥२॥
हरिरिव हरिराजो भूपतिर्भूमिर्वोच्य(?)भवदभयराजः कीर्तिचन्द्रः सुकीर्त्तिः ।
तदनुजकविरूपो रूपचन्द्रो वितंद्रो विमलसुमतिचक्षुर्जैनसिद्धांतदक्षः ॥३॥

स रूपचन्द्रोऽथ समाव्रजत्पुरीं वानारसीं बोधविधानलब्धये।
आस्वाद्य शब्दार्थसुधारसं ततः संप्राप्तवांस्तद्दरियापुरं परं ॥४॥
विराजिते यत्र महोदये कुलं न राजते किं न महोदयाकुलं।
न यत्र केन क्रियतेऽप्यसत्क्रिया न(ना ?)क्रियते केन य एव सत्क्रियाः ॥५॥

× × × ×

श्रीमत्साहिजलालदीनविलसद्वंशाद्रिभास्वान्महा-
नुद्यद्विश्वमहोमहोदयजहांगीरात्मजः सज्जयः।
स श्रीसाहिजहांनरेन्द्रमहितो मद्या(ह्या)चकत्तान्वयः
श्रीन्द्रप्रस्थपुरप्रतापविदितो यत्पालने प्रोद्गतः ॥१०॥

श्रीमन्मूलमहोदयैकतिलकश्रीनंदिसंघप्रभुः
प्रायः प्रोल्लसदुत्तरस्याग(?) बलात्कारे गणे गौरवः।
गच्छे स्वच्छसरस्वतीप्रविदिते श्रीकुन्दकुन्दान्वये
वादीभेदमदप्रभेदनविधौ श्रीसिंहकीर्तिर्महान् ॥११॥

तत्पट्टाद्रिविभास्करो धृतिधरः श्रीधर्मकीर्ति कृती
तस्मात्शीलविभूषणो गुणनिधिर्गण्यो गणीन्द्रोऽजनि।
सिद्धांताम्बुधिपारसारसुहितः प्रायः प्रतापस्ततः
प्रोद्यत्पुण्यपरः प्रसिद्धमुनिराट् श्रीज्ञानभूषोऽभवत् ॥१२॥

तत्पट्टे प्रमदप्रकाशविलसत् श्रीभारतीभूषणः
चारित्राचरणाच्चमत्कृतदृशः किं वा तपोभूषणः।
श्रीभट्टारकवंदितांह्रियुगलो गण्योऽप्यनुद्दूषणः
शश्वत् किन्ननमस्यते बुधगणैः श्रीमज्जगद्भूषणः ॥१३॥

श्रीमद्गोलापूर्वान्वयगिरिशिरसि प्रोद्गतो विश्वविद्या-
लीलाविध्वस्तमिथ्यात्वविभवतिमिरस्तोमलब्धप्रतापः।
भास्वानाधोगोत्रप्रविदितविभवः श्रीजगद्भूषणाना-
माम्नाये सन्निधानोऽभवदखिलगुणो दिव्यनेत्राविधानः ॥१४॥

तत्पत्नीकृतवर्गपोपविधित स्वर्गैकसपत्कर'
धर्माश्लिष्टविशिष्टमाणसुगुणादुर्गाख्यया संगतः ।
आसीत् शक्रसमः सुपूर्वतनयः श्रीचक्रसेनस्तयोः
प्रोद्यच्चित्रविचित्रतागुणमयः श्रीमित्रसेनोऽपर ॥१५॥
यद्विद्याप्रभवत्प्रतापभयभाग् विद्वद्घटाभूयसा ।
व्याजप्राप्तवनातरापि भयता श्रीचक्रपाणिश्रुते ॥१६॥
वक्ते विस्तरता किमत्र तदिह प्रायष्युनर्वर्ण्यते(?) ।
प्राशैस्तद्गुणगौरवस्य जयतु श्रीचक्रसेनो महान् ॥१७॥
तस्य प्रिया शीलनिधिशलील(?) कृष्णावती तत्प्रभवोऽतिविद्यः ।
थो गाजितो भोगसमीप्सितात्मा सुयोगभावोपि विभाति भूत्या ॥१८॥
इजा इवाख्यात्र तदंगनास्तयोर्बभूवतु' केवल-धर्मसेनकौ ।
सुतौ सुशीलौ विलसत् प्रभापरौ जगत्त्रये पुष्पवता सुसपदः ॥१९॥
श्रीमद्दिव्यद्दृशो द्वितीयतनयः पूर्णप्रतापप्रभा-
भामच्चारुललाटहर्षितजनस्तौमैकचेतोऽम्बुज' ।
स श्रीचित्रपवित्रतात्मविभवः श्रीमित्रसेनो महान्
सद्दानैकनिधानता प्रविदधत् संप्राप्तमानो बभौ ॥२०॥
सुशीलया तत् प्रियया प्रभूतो यशोदया गीतगुणो यशोभि ।
सघाधिपः श्रीभगवानदासो विराजतेऽसौ परमप्रतापी ॥२१॥
तद्भामिनी केशरिदे शुभानना तयोः प्रजातास्तु सुता अमी त्रयः ।
महादिसेनो जिनदाससशिकस्ततो मुनिःसुव्रतवाक् सुखप्रदाः ॥२२॥
श्रीमित्रसेन-तनयो हरिवंशो द्वितीयकः ।
विशिष्टगुणसपन्नो विभाति वृषवत्सलः ॥२३॥
श्रीमान् श्रीभगवानदास इति वाक्पूर्णप्रतापो महान्
भक्त्या श्रीजिनराजपादयुगलप्रायः प्रतिष्ठापनं ।
कृत्वा यो भुवि सघराजपदवीं चिक्राय(?)सद्विक्रमी
भूयो दानविधानमानकरणैर्जो ........ श्रिरं ॥२४॥

श्रीमान्कि भरतेश्वरः किमथवा श्रेयान्नृपः श्रेयसा
शक्रः किं किमु देवसूरिरनघः कि राजराजो महान् ।
यस्यालोकविधौ प्रसिद्धविबुधाः सदिग्धभाजोऽभवन्
सोऽयं श्रीभगवानसंघपतिराट् प्रायश्चिर जिव्य(जीय)ताम् ॥२५॥

× × × ×

तेन श्रीवरसंघराजभगवद्दासेन सपोषिता
वाग्देवी बुधरूपचंद्रमभितः संप्रेयमाणाऽभवत् ।
श्रीसर्वज्ञपदाबुजार्चनकृतौ कैवल्यकेलीमयं
चक्रे चारुपदावलीललितमाचार्यसज्र्या(?)विधि ॥३२॥

ज्ञात्वा श्रीमुनिपाणिनीयमतुलालंकारपारं दधत्
षट्तर्काविधिना(?) प्रपद्य श्रु(?)बृहत्तारादिकानागमान् ।
सिद्धान्तान् परिचिंत्य वाग्भटकृतामा(ना)शाधरीश्र(म)द्भुता
बुध्वा वृत्तिमचीकरं किमपरं कैवल्यसपूजनम् ॥३३॥

श्रीमत्सवत्सरेऽस्मिन्नरपतिनुतयद्विक्रमादित्यराज्ये-
ऽतीते दृगनंदभद्रास(शु)कृत्परिमिते(१६६२ ?) कृष्णपक्षे ष(?)मासे ।
देवाचार्यप्रचारे शुभनवमतिथौ सिद्धयोगे प्रसिद्धे
पौनर्वस्वित्पुडस्थे(?) समवसृतिमहं प्राप्तमासासमाप्तिं ॥३४॥

अनेकतर्कसंकर्ष-प्रहर्षित-बुधोत्तमः
स्वर्ध्वनीव यशस्फूर्त्तिर्जीयात् श्रीप्रीतिवर्द्धनः ॥३५॥

जीयात् श्रीरूपचन्द्रश्चिरमिह महितः शब्दशास्त्रार्थधीरैः
वीरः प्रज्ञावता यो बुधगणवनिता-गीयमानो यशोभिः ।
सद्वादे सर्वविद्यावरद इतिपद विश्वलोके प्रसिद्धं
विद्वद्दे वाधिदेवः प्रवरजिनमते स्रग्धराभ्यर्च्यमानः ॥३६॥

जीयात् श्रीनेत्रसिंहोऽयं शाश्वत्शिष्याग्रणीर्महान् ।
नित्यं नेत्रमिवाभाति विद्वज्जनवचो(मनो)हरः ॥३७॥

शब्दार्थरीतिरूपाढ्या गुणालंकारधारिणी ।
जिनार्चा भामिनी भूयात् प्रसिद्धेयं महीतले ॥३८॥
श्रीमता रूपचन्द्रेण कृतेयं श्रीजिनार्हणा ।
कारिता भगवद्दास-संघराजेन भक्तितः ॥३६॥
आचार्यकश्रीजिनेशेन(जिनसेन)भाषितमहापुराणोक्तविधेरनुक्रमात् ।
कृतेयमर्चा जिनकेवलोदया भव्यात्मानां संविदधातु मंगलं ॥४०॥

× × × ×

जिन-सिद्ध-महाचार्योपाध्यायसाधवः सदा ।
कुर्वन्तु संस्तुताः श्रीमद्रूपचन्द्राय मंगलं ॥४८॥

इति श्रीमत्पण्डितरूपचन्द्र-कृत श्रीसंघाधिपति-भगवानदास-कारितं भगवत्समवसरणार्चनविधानं समाप्तं ॥

## १०८. सुखनिधान ( कवि जगन्नाथ )

आदिभाग :—

नाभेयं करुणासिंधुं भव्यपंकज-भास्करं ।
शाश्वतं सौख्यसदनं नमामि भवशान्तये ॥१॥

× × × ×

श्रीश्रीपालचरित्रस्य रचने महती मम ।
वाञ्छा प्रजायतेऽत्यन्त विदेहस्थस्य चक्रिणः ॥४७॥
मंदबुद्धिः कलामूढो विद्याभ्यासपरिच्युतः ।
यदहं शास्त्रकर्तेति गमिष्यामि हसं बुधा(धान् ?) ॥४८॥
तथा च—कवयः सिद्धसेनाद्या [वयं तु] कवयो मताः ।
मणयः पद्मरागाद्या ननु काचोपि मेचकः ॥४६॥
परं किमत्र पांडित्यं सरलैर्निनदैरिवं(रहः?) ।
चरित्रं रचयाम्येष नाम्ना सुखनिधानकं ॥५०॥

अन्तभाग :—

धीरा विशुद्धमतयो मम सच्चरित्रं कुर्वन्तु शुद्धमिह यत्र विपर्ययोक्तं।
दीपो भवेत्किल करे न तु यस्य पुंसो दोषो न चास्ति पतने खलु तस्य लोके॥
आचार्यपूर्णेन्दु-समस्तकीर्ति-सरोजकीर्त्यादिनिदेशतो मे।
कृतं चरित्रं सुपुरांतमाले श्रीपालराज्ञः शंधामनाम्ना ॥२०६॥
दिवाकरो निशाकरो नदीश्वरोथ भूतलं नभोपि भानि भाति वै घनाथ तारकाः(?)
उमापती रमापतिः शचीपतिर्जगत्पतिर्भवेत्स यावदेष कोपि तावदेव राजतां॥२१०
खखर्षिभूमीन्दुयुते(१७००)सुवत्से शुच्या दशम्यां च शुभाऽश्विनस्य।
पुरातमाले सुपुरे महेन ग्रन्थ जगन्नाथसुधीरकार्षीत् ॥२११॥
मंगलश्रीमद्याभामत् महाराजमहानग
मतिमन्नाम भो नाथ म(य)तीना धीमतां वरः ॥२१२॥
नामगर्भित-कमलबन्धमिदं।

इति विमलसकलागमावलीमडित-खंडितानेककुवादि-परिरंजिताखिल-लोक-सच्चातुरीकातरीकृतमिथ्यात्वनिवहस्य राजेन्द्रकीर्त्ति* मुख्यातेवासिना गद्यपद्यविद्याविनोदाम्बुधिना कविचक्रवर्तिना जगन्नाथनाम्ना कृते सुखनिधाननाम्नि ग्रथे विदेहक्षेत्रस्थश्रीपाल-मुक्तिगमननामः पंचमः परिच्छेदः ॥५॥

## १०६. पद्मचरित-टिप्पण ( श्रीचन्द्रमुनि )

आदिभाग :—

शंकरं वरदातारं जिनं नत्वा स्तुतं सुरैः।
कुर्वे पद्मचरितस्य टिप्पित(प्पण) गुरुदेशनात् ॥१॥

अन्तभाग :—

'लाडवागडि - श्रीप्रवचनसेन-पंडितात्पद्मचरितस्सकर्ण्यो( माकर्ण्य )

---

* पूर्वकी सब संधियोंमें 'नरेन्द्रकीर्ति' नाम है, यहाँ यह 'राजेन्द्रकीर्ति' उसीका पर्यायनाम जान पड़ता है।

बलात्कारगणश्रीश्रीनंद्याचार्यसत्कशिष्येण श्रीचंद्रमुनिना श्रीमद्विक्रमादित्यसंवत्सरे सप्ताशीत्यधिकवर्षसहस्रे(१०८७) श्रीमद्धारायां श्रीमतो भोजदेवस्य राज्ये पद्मचरित [टिप्पणं कृत]। एवमिदं पद्मचरितटिप्पितं श्रीचन्द्रमुनिकृत समाप्तमिति।

## ११०. श्रीदेवताकल्प ( भ० अरिष्टनेमि )

आदिभाग :—

प्रणम्य जिनमुत्तुंग-स्याद्वादनयभासुरं।
क्रियते श्रीदेवताकल्प कल्यामरसुसेवित ॥१॥
नानावृत्त-पदन्यास-वर्णालंकाहारिणी।
सन्मार्गागी मिता जैनी प्रसन्ना नः सरस्वती ॥२॥
विद्यानुवादनिलयं श्रुतसारविद्भिर्भव्योपकार इति चिंत्य महर्षिभिस्त।
स्पष्टीकृत पुनरहं विदधेऽल्पबंध नात्यन्तविस्तरकृत न विदल्यशेषं ॥३॥
मंत्री मंत्रविधिर्होमो देवताराधनक्रिया।
यंत्र-मंत्र-प्रयोगाश्च दृश्यन्तेऽत्र विशेषतः ॥४॥

अन्तभाग :—

श्रीयुवतिसदनपद्मं राजेन्द्रशिरस्सुशेखरीकृतपद्म।
भव्यानिहितपद्मं (?) श्रीवीरसेनपदयुगपद्म ॥२०६॥
शिष्यः श्रीवीरसेनस्य विद्वद्विनयनायकः।
गुणसेनो महाख्यातो मदवादीभकेशरी ॥२१०॥
तस्य शिष्यो भवेत्ख्यातो विद्वद्भोजभास्करः।
विशिष्टोऽरिष्टनेमीशो दुष्टवादिमदापहः ॥२११॥
रचित नेमिनाथेन त्रैविद्येन यतीशिना।
स्थेयाच्छ्रीदेवताकल्प यावच्चन्द्र-दिवाकरौ ॥२१२॥
इत्यरिष्टनेमि-भट्टारकविरचिते श्रीदेवताकल्पे तत्राधिकारः समाप्तः।

[ जौहरी मनोहरलाल देहली प्रति

## १११. क्षपणासार (माधवचन्द्र-त्रैविद्यदेव)

**आदिभाग :—**

श्रीसद्धर्मसमुद्रनंदनवरः सवृद्धरत्नाकरः
सत्सेव्यो विमलोऽतुलः सुखकरो लोकप्रकाशप्रदः।
उद्यद्धीबलभद्रमाधवनुतश्रीपादपद्मद्वयो
यो यूयं नमतादराकृतधियस्तं नेमिचन्द्रं सदा ॥१॥

क्षपणासारशास्त्रस्य नादीसूत्रव्याख्यानमिद—

**श्रीसद्धर्म्मसमुद्रनंदनवरः** सतागराज्यलक्ष्म्या विशिष्टक्षात्रधर्मेण च युतः **समुद्रविजयप्रियपुत्रः, संवृद्धरत्नाकरः** × × × × × एवं विधं हरिकुलतिलकभूतनेमिनाथस्वामिन शास्त्रकार. स्वयं निर्भरभक्त्या नमन् यूयमपि नमस्कृत्य कृतार्था भवतेति भव्यजनान् प्रेरितवानित्यर्थः। शास्त्रकारस्य गुरु **नेमिचन्द्रसिद्धांत**चक्रवर्तिवंदनारूपेणाथवा मगलसूत्रं व्याख्यान कर्तव्यं। तद्यथा—यः **श्रीसद्धर्मसमुद्रनंदनवरः** स्याद्वादलक्षणलक्ष्मीजन्मावासभूतः विशिष्टसागाराऽनागार-धर्म्म-समुद्र-वर्द्धनमुख्य., **सवृद्धरत्नाकरः** पंचविंशतिमलरहितविशिष्टसम्यक्तनिरतिचारचारुचारित्रसकलशास्त्रार्थ-परिच्छेदनपटियदुष्ट(?)विमलज्ञानरूप-रत्नानामुदयस्याकरभूतः, **सत्सेव्यः** विद्वज्जनपूज्यः, **विमलः** अनवरतपरमागमभावनासुधासागरवगाहप्रक्षालितात्मीय-कलिकलुषमलपकसदोहः, **अतुलः** कवि-गमकि-वादि-वाग्मिता-गुणैरद्वितीयः, **सुखकरः** मिथ्यात्वाद्यपाय-निराकरणेन सम्यक्त्वाद्युपाय-प्रदर्शनेन समस्तजनस्य हितकरः, **लोकप्रकाशप्रदः** श्रुतज्ञानप्रबल-प्रभाकर-प्रभूत-प्रभा-प्रभावेन जनस्य सर्वपदार्थानां करतलामलकवद्दर्शकः, **उद्यद्धीबलभद्रमाधवेनः** सूक्ष्मखंडात्मकसिद्धांतार्थ-धारणा-प्रतिपादन-समर्थ-मतिबलविशिष्टगुणैरुत्कृष्ट**माधवचन्द्रमुनिना** पञ्चागमत्रबृहस्पतिसमानबुद्धि-युत-भोजराजप्राज्यसाम्राज्यसमुद्धरणसमर्थ-बाहुबलयुक्त-दानादिगुणोत्कृष्ट-महामात्य-पदवी-लक्ष्मी-वल्लभ-बाहुबलिमहाप्रधानेन वा, **नुत श्रीपाद-**

पद्मद्रव: वंदितश्रीपादपद्मयुगलः तं नेमिचंद्रं एवं विधं नेमिचन्द्राचार्यं कृतधियः एतच्छास्त्रश्रवणे दत्तचित्ताः श्रोतृजनाः यूयमादरात् निर्भरभक्त्या सदा सर्वकालं नमत वंदना कुरुत। चंद्रेण सह श्लेषो तत्पक्षेऽपि अयं सूत्रार्थः संबंधनीयः × × × × ×।

अन्तभाग :—

यः कृष्टि स्पर्द्धकाना व्यतनुत विधिवल्लक्षणं तद्विकल्पं
साकल्येन प्रमाणं नशनविधिमतो मोक्षसंप्राप्त्युपायं।
भक्त्या भव्या भजध्वं कृतियतिवृषभं त सदालोकदृष्टिं
षट्खंड श्रीधवाद्यद्विजविभुवलवद्बाहुबल्यर्च्यपादं ॥१०॥

ये कृत्वा धवलां जयादिधवलां सिद्धांतटीका सतीं
चंद्रार्कद्युतवत्समस्तभुवनं प्राकाशयन् संततं।
उत्कृष्टं च महापुराणमनिशं तान्संघनिस्तारकान्
वंदध्वं वर वीरसेन-जिनसेनाचार्यवर्यान् बुधाः ॥११॥

कीर्तिश्छत्रयुतस्तपोबलवृतश्चारित्रसिंहासनः
शीलास्त्रः शमचामरः पृथुदयादुर्गः सुदृक्कोशवान्।
प्रज्ञाचक्रधरः सुयोगसचिवः सिद्धांतषट्खंडकं
यो रक्षन् मुनिचन्द्रसूरि-सुपतिं तं नौमि मूर्ध्नादरात् ॥१२॥

दुःखौर्वे जननादिवीचिनिचयं मिथ्यात्वनक्राकुलं
मोहाम्बुनरकादिगर्तममितं घोरं भवाभोनिधिं।
यः सत्पालयतत्त्वदेशनमहा नावाहमुत्तीर्णवान्
सैद्धांताधिपनेमिचन्द्रगणिनं तं नंनमीमि त्रिधा ॥१३॥

विनेयसुखकारकं सकलसघनिस्तारकं
स्मरेभमददारकं नियमसंयमाराधकं।
त्रिगौरवनिवारकं श्रुतसमुद्रसंपूरकं
नमामि गणधारक सकलचन्द्रभट्टारक ॥१४॥

तपोनिधिमहायशः सकलचन्द्रभट्टारकः
प्रसाधिततपोबलादिविपुलबोधसच्चक्रतः ।
श्रुताम्बुनिधिनेमिचन्द्रमुनिपप्रसादा-
गतात्प्रसाधितमविघ्नतः सपदि येन षट्खंडकं ॥१५॥
अमुना माधवचन्द्रदिव्यगणिना त्रैविद्यचक्रेशिना
क्षपणासारमकारि बाहुबलिसन्मत्रीशसंज्ञप्तये ।
शककाले शरसूर्यचंद्रगणिते(११२५) जाते पुरे दुल्लके
शुभदे दुंदुभिवत्सरे विजयतामाचंद्रतारं भुवि ॥१६॥

इति क्षपणासारः समाप्तः । संवत् १८१६ मिति वैशाखवदि ११ दिने ।
[ जयपुर तेरहपंथी मन्दिर प्रति

## ११२. षड्दर्शनप्रमाणप्रमेयसंग्रह ( शुभचन्द्र )

**आदिभाग :—**

साद्यनंतं समाख्यातं व्यक्तानंतचतुष्टयं ।
त्रैलोक्ये यस्य साम्राज्यं तस्मै तीर्थकृते नमः ॥

सकलतीर्थकृदाभिमतप्रमाणप्रमेयानुप्रवेशार्थमिदं । तत्र तावदर्हतोऽप्रतिहतशासनस्य—तत्त्वज्ञानं प्रमाणं । तद्द्विविधं प्रत्यक्षं परोक्षं च । स्पष्टमाद्यमस्पष्टमन्यत् । त्रिधा च सकलेतरप्रत्यक्ष-परोक्षभेदात् । करण-क्रमव्यवधानापोढं सकलप्रत्यक्षं । क्रमान्वितं करणव्यवधानापोढं विकल-प्रत्यक्षं । इंद्रियमनोव्यापाराभिमुखेतरार्थापेक्षं परोक्षं । अथवा मतिश्रुता-वधिमनःपर्ययकेवलभेदात्पंचतयं ॥

**अन्तभाग :—**

इति नैय्यायिकमतानुप्रवेशः ॥

मतसमासः । अमीभिः पुनर्वत्स विवेकमहापर्वतारूढैरप्रमत्तशिखर-स्थितैर्जिनपुरनिवासिभिः जैनलोकैरयं दृष्टो निर्वृतिनगरीगमनमार्गः । यदुत—

जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्व। तत्र सुखदुःखज्ञानादिपरिणामलक्षणो जीवः। तद्विपरीतस्त्वजीवः। मिथ्यादर्शनाविरतिप्रमादकषाययोगा बंधहेतव। कायवाङ्मनः कर्म योग। स आस्रवः। आस्रवकार्यं बन्धः। आस्रवनिरोधः संवरः। संवरफल निर्जरा। निर्जराफलं मोक्षः। इत्येते सप्तपदार्थाः। तथा विधिप्रतिषेधानुष्ठानपदार्थाविरोधश्चात्र जैनेन्द्रदर्शने। स्वर्ग-केवलार्थिना तपोध्यानादि कर्तव्य। सर्वजीवा न हंतव्याः। इति वचनात्। 'समितिगुप्तिश्रद्धाक्रियासपत्नो(?)योग' इति वचनात्। उत्पादविगमद्र(ध्रौ)व्ययुक्तं सत्। एकं द्रव्यमनंतपर्यायमर्थ इति। प्रत्यक्षपरोक्षे द्वे एव प्रमाणे। इति जैनमतस्य निदर्शनमात्रं॥

जयति शुभचन्द्रदेवः कडूर्गणपुडरीकवर(न)मार्तंडः।
चडत्रिदंडदूरो राद्धान्तपयोधिपारगो बुधविनुतः॥

## ११३. तत्वार्थवृत्तिपद (प्रभाचन्द्राचार्य)

आदिभाग :—

सिद्ध जिनेन्द्रमलमप्रतिमबोध त्रैलोक्यवंद्यमभिवद्य गतप्रबंध।
दुर्वारदुर्जयतम प्रविभेदनार्कं तत्त्वार्थवृत्तिपदमप्रकटं प्रवक्ष्ये॥

कश्चिद्भव्यः प्रसिध्येक(?)नामा प्रत्यासन्ननिष्ठ निष्ठाशब्देन निर्वाण चारित्रं चोच्यते प्रत्यासन्ना निष्ठा यस्यासौ प्रत्यासन्ननिष्ठ.। अवाग्विसर्ग······।

अन्तभाग :—

इति दशमोध्याय समाप्त

ज्ञानस्वच्छजलस्सुरत्ननितरा(चय)श्चारित्रवीचीचयः
सिद्धान्तादिसमस्तशास्त्रजलधि. श्रीपद्मनन्दिप्रभुः।
तच्छिष्यान्निखिलप्रबोधजनन तत्वार्थवृत्तेः पद
सुव्यक्त परमागमार्थविषयं जात प्रभाचन्द्रतः॥
श्रीपद्मनन्दिसैद्धान्तशिष्योऽनेकगुणालयः।
प्रभाचन्द्रश्चिरं जीयात् पादपूज्यपदे रतः॥

मुनीन्दुर्नंदतादिदन्निजमानदमोंदरं ।
सुधाधारोद्गिरन्मूर्तिः काममामोदयज्जनं ॥
इतितत्त्वार्थवृत्तिपदं समाप्तम् ।

## ११४. करकण्डु-चरित्र ( भ० शुभचन्द्र )

**आदिभाग :—**

श्रीमते श्रुतिसिद्धाय प्रबुद्धाय परात्मने ।
नमो वृषभनाथाय नरनाथनताह्वये ॥१॥

**अन्तभाग :—**

('श्रीमूलसंघेऽजनि पद्मनन्दी' इत्यादि पद्य नं० ३४ से लेकर ४७ तक १४ पद्य प्रायः वे ही हैं जो पाण्डवपुराणकी प्रशस्तिमें पृष्ठ ४६-५० पर न० १६७ से १८० तक मुद्रित हो चुके हैं।)

करकडुनरेन्द्रस्य चरितं तेन निर्म्मितं ।
जिनेशपूजनप्रीत्येदं समुद्धृत्य शास्त्रतः ॥४८॥
शिष्यस्तस्य समृद्धिबुद्धिविशदो यस्तर्क्कवेदी वरो
वैराग्यादिविशुद्धिवृद्धिजनकः सर्व्वार्थसुज्ञो महान् ।
संप्रीत्या सकलादिभूषणमुनिः संशोध्य चेद शुभं
तेनालेखि सुपुस्तक नरपतेराद्य सुचपेशिनः ॥४६॥
सकलभूषणआद्यसुभूषणो मुनिरभूदिह शास्त्रसुसग्रहे ।
अकृतयोधिकृतः सुसहायता पठन-पाठन-लेखन-सद्विधौ ॥५०॥

× × × ×

श्रीमूलसंघे कृत(ति)नंदिसघे गच्छे(गणे?)बलात्कार इदं चरित्र ।
पूजाफलेद्ध करकडुराज्ञो भट्टारकश्रीशुभचन्द्रसूरिः ॥५४॥
द्वाष्टे विक्रमतः शते समइते चैकादशाब्दाधिके (१६११)
भाद्रे मासि समुज्वले युगतिथौ खड्गजवाछे पुरे ।

श्रीमच्छ्रीवृषभेश्वरस्य सदने चक्रे चरित्रं त्विदं
राज्ञ श्रीशुभचन्द्रसूरियतिपश्चपाधिपस्याद्भुत ॥५५॥
श्रीमत्सकलभूषेण पुराणे पांडवे कृत ।
साहाय्य येन तेनाऽत्र तदकारि सुसिद्धये ॥५६॥

इति भट्टारक-श्रीशुभचन्द्रविरचिते मुनिश्रीसकलभूषणसाहाय्यसापेक्षे भव्यजन-जे(स)गीयमान-यशोराशिश्रीकरकडुमहाराजचरिते करकडुदीक्षा-ग्रहण-सर्व्वार्थसिद्धिगमनवर्णनो नाम पञ्चदश. सर्ग. ॥१५॥

[ देहली सेठ कूँचा मन्दिर प्रति

## ११५. शांतिकविधि ( प० धर्मदेव )

**आदिभाग :—**

प्रणिपत्य जिनान् सिद्धानाचार्यान्पाठकान् यतीन ।
सर्वशात्यर्थमाम्नायपूर्वकं शांतिकं ब्रुवे ॥ १ ॥

**अन्तभाग** :

पोरपाटान्वये श्रीमान् वाग्भटः श्रावकोत्तम· ।
तत्पुत्रो वरदेवोऽभूत्प्रतिष्ठाचारकोविद ॥१॥
श्रीदत्ताख्यस्तदनुज सर्व्वशास्त्रविशारदः ।
तत्पत्नी मानिनी ख्याता पातिव्रत्यविराजिता ॥२॥
तयोस्तु धर्म्मदेवाख्यः पुत्रोऽभवदनूद्भवः ।(···?)
श्रीगोगाख्यस्य विशास्य(?) दूरीकृतकलागुणः ।(···?) ॥३॥
तेनाकारि शुभायेदं शांतिकस्नानमुत्तमं ।
पठन्तु श्रावकाः सर्व्वे शोधनीय महात्मभिः ॥४॥
यावन्मेरुर्मही यावद्यावच्चन्द्रार्कतारकाः ।
तावद्भद्राणि पश्यन्तु शातिकस्नानपाटका ॥५॥

इति श्रीपंडितधर्म्मदेवविरचितं श्रीशांतिकपूजाविधान समाप्तम् ।

[ जौहरी मनोहरलाल देहली प्रति

## ११६. अम्बिका-कल्प ( भ० शुभचन्द्र )

**आदिभाग :—**

वन्देऽहं वीरसन्नाथं शुभचन्द्रो जगत्पतिं ।
येनाप्येत महानुक्ति-वधूस्त्री-हस्तपालनम् ॥१॥
ज्ञानभूषं तपोभूषं धर्मभूषं सुभूषणम् ।
प्रणम्य वक्ष्येऽहं कल्पं तीव्रज्ञानप्रवर्द्धकम् ॥२॥
ऊर्जयंत-निवासिन्याः यक्षिमुख्यायाश्चाम्बिकायाः(?) ।
तत्पादौ प्रणम्य च त्रिजगतीक्षेमकरौ(?) ॥३॥ युग्मं
जीवकोद्भव-सच्चन्द्र-पांडवोद्भव-दत्तक-
प्रमुखाना चरित्राण्यवदत् सोऽहं वदाम्यहम्(?) ॥४॥
कुन्दपट्टे यथाग्रथं जिनसेनोऽपि नामतः ।
सोर्थो ह्यरीरचन्मगलं श्रीमत्रप्रसगहं(?) ॥५॥
गुणभद्रस्तदन्तेयः सोपि सार्थो हि टिप्पणं ।
ग्रंथं चक्रे महाकोचसुकोचफलपूरितं ॥६॥
तदन्वये मन्दबुद्धिर्जातोऽह व्रीडपूरितः ।
तथाप्याम्नायं मुमोच न हि जैनपरम्परा ॥७॥
अर्हत्सिद्धाचार्योपाध्यायसुसर्वसाधूना ।
प्रथमाक्षरेण मिलितः प्रणवः सिद्धिमागमत् ॥८॥

**अन्तभाग :—**

शुभचन्द्रो मुनिरहं जिनदत्तस्य चाग्रहात् ।
ब्रह्मशीलस्य तस्यैवं पठनार्थं दिने कृतं ॥१२॥
गुरुणा मत्रदेशो(?) न कथितो मारदूषणात् ।
तथापि नाहं चक्रेशौ(?) वादात् श्रीधर्मणः कृतात् ॥१३॥
सौबौद्धस्त्वं ज्ञातासि त्वन्मते शक्तिरर्हतः ।
पाखडिमतविख्यातस्तवेति कथितस्तदा ॥१४॥

जिनदत्तस्य ज्ञानार्थं दिने चैके कृतं मया ।
ज्ञानिना वाचितोसौ च मा भू. सिद्धोस्यदूषण(?) ॥१५॥
× × × ×

इत्यबिकाकल्पे चार्षे शुभचन्द्रप्रणीते सप्तमोऽधिकारः समाप्तः ॥७॥

नाम्नाधिकारः प्रथितोयं यत्रसाधनकर्मणः ।
समाप्त एषमत्रोऽय पूर्णं कुर्यात् शुभवनः(?) ॥१॥

इत्यम्बिकाकल्पः । { जौहरी मनोहरलाल देहली प्रति

## ११७. तत्त्वार्थ-टिप्पण ( भ० प्रभाचन्द्र )

आदिभाग '—

सो णवमि वीरणाह वीरो वरवीरमाइमजुत्तो ।
णामाइ पच सहिओ कम्मचुओ मोक्खसपत्तो ॥१॥
इहैव भारते क्षेत्रे आर्यवे(?)सुरसत्प्रिये ।
हिरण्याक्षे (हरनाख्ये) जनपदे जिनतीर्थसमन्विते ॥२॥
सुनामाख्य पुर तत्र विबुधैर्म्मंडित वर ।
जिनवंश्मनि ससीनो नयसेनार्य-संततौ ॥३॥
लतातसरयूथेन्द्र(?) हरिः क्रोधानलाष्टक. ।
श्रीमद्भट्टारको हेमकीर्तिस्तत् शिष्यक. सुधी ॥४॥
धर्मचन्द्रो यतिपतिः जैना(काष्ठा)म्नायाभ्रभास्कर ।
तत्पट्टे श्रीप्रभाचद्रः सर्वसघसमन्वितः ॥५॥
धर्म्माख्यानं च कुर्वन् सन् यावदास्ते दिगबर ।
तावदुवाच काल्हूतुक(सुत ?) ह्रावासाधु प्रणम्य च ॥६॥
अध्यात्मरससंसिक्त मानस यस्य निर्मलं ।
भो मुने सद्गुणावास तत्त्वार्थं कथय प्रभो ॥७॥
एतद्वचः समाकर्ण्य प्रोवाचेति कथ मया ।
धीविना कथ्यतत्त्वार्थं बहुभेदेन सयुत ॥८॥

तथापि कथ्यते साधो शृणुदत्तावधानतः ।
बुद्ध्या विनापि पूर्वार्यैः भाषित यज्जिनागमे ॥६॥'
धर्माख्यन म कुरुते तावत्कतिपयैदिनैः ।
चलचित्तो मुनिर्यातो देशान्तरगमोद्यतः ॥१०॥
प्राप्तः पुरे सकीटाख्ये समानीतो जिनालये ।
लंबकञ्चुकआम्नाये सकरू( तू ) साधुनंदनः ॥११॥
पडितो सोनिको विद्वान् जिनपादाब्जषट्पदः ।
सम्यग्दृष्टी गुणावासो बुध-शीर्षशिरोमणि' ॥१२॥
प्रणम्य वचनं प्रोक्तं भो यते कामकेसरे ।
सरलं सतत्त्वार्थं ममाग्रे कथय प्रभो ॥१३॥
तद्वचनाद्यतिपति. प्रोवाच शृणु पंडित ।
कथयामि तवाग्रेऽहं तत्वार्थं यज्जिनोदित ॥१४॥
पंचगुरुनमस्कारं कृत्वा तत्त्वार्थसूत्रसुगमार्थं ।
टि(सद्टि ?)प्पणं करोमि भव्यजन-प्रबोधनार्थाय ॥१५॥

( आगे 'मोक्षमार्गस्य नेतार' इत्यादि मंगलपद्यसे टिप्पणका आरंभ है । )

अन्तभाग :—

द्वीपेऽथ जंबूपपदे जंबूवीरुहलक्षिते ।
भारतं तत्र विख्यातं क्षेत्र षट्खंड[रा]जितं ॥४॥
तत्रार्यखंडविदितो जिनतीर्थैरलंकृत ।
पंचालस्तत्र विषयो जनसौख्यप्रदायकः ॥५॥
श्रीमत्काष्ठान्वये ख्यातः कामकुञ्जरकेशरी ।
भट्टारकः सुरेन्द्राद्या हेमकीर्तिर्मुनीश्वरः ॥६॥
तत्पट्टे निर्मदः शान्तः मायावल्ली-धनंजयः ।
सर्वग्रन्थार्थविदुषो(?)धर्म्मचन्द्रो गुणाग्रणीः ॥७॥
तच्छिष्योऽखिलसद्गुणौघजलधिर्मिथ्यातमार्क्को मुनि-
स्त्यक्ताशेषपरिग्रहो हरिशतैः पूज्याङ्घि······लालजः ।

तर्कव्याकरणादिशास्त्रसकलाम्भोराशिपारं गतो
भव्याभोरुहपूर्णतिग्मकिरण' श्रीमान् प्रभाचन्द्रकः ॥८॥
सर्वसंघसमोपेत' विहरन्नेकदा स वै।
समायात' सकीटाख्ये नगरे वैरिदुर्जये ॥९॥
यस्मिन्नुपासका बहवः जिनधर्मपरायणाः।
सत्पात्रदानवन्तश्च गुरुपादाब्जषट्पदाः ॥१०॥
· ·······गृहे तत्र ध्वजापट्टादिशोभित ।
नाभेयप्रतिबिम्ब यत्राभात्सुरनरार्हितं ॥११॥
तस्मिन् का ··· यन् ··· भिः प्रभाचन्द्रमुनीश्वरैः।
स्वहृदि चिंतितं किंचित् क्रियते काव्यमुत्तमं ॥१२॥
एतत्सुगममस्माभिस्तत्त्वार्थसारटिप्पण ।
शोधयतु बुधाः किंचिद्यदि शासन-दूषितं ॥१३॥
अस्मिन्संवत्सरे विक्रमादित्यनृपतेः गते ।
चतुर्दशशतेऽतीते नवासीत्यद(शीत्यब्द)संयुते(१४८९) ॥१४॥
भाद्रपदे शुक्लपक्षे पंचमीवासरे शुभे ।
वारेऽर्के वैधृतियोगे विशाखाऋक्षके वरे ॥१५॥
तत्त्वार्थटिप्पणं भद्र प्रभाचन्द्रतपस्विना ।
कृतमिदं प्रबोधाय जैताख्यब्रह्मचारिणे ॥१६॥
यावद्धरिहरी व्योम्नि यावद्धरिः सुरालये ।
तावद्धर्म्मरतः श्रीमज्जैनसंघोऽभिनंदतात् ॥१७॥

इति श्रीमद्भट्टारकधर्मचंद्रशिष्यगणिप्रभाचन्द्रविरचिते तत्वार्थ-टिप्पणिके ब्रह्मचारिजैता-साधुहावादेवनामांकिते दशमोऽध्यायः समाप्तः।

यस्तुर्यदानपरिपोषित ········ ················।
श्रीमत्प्रभाशशियतीश्वर-पादलीनः पुत्रान्वितो भुवि स नंदतु हावसाधुः ॥

इति [तत्त्वार्थ-] सूत्रटिप्पण समाप्तं।

## ११८. गणितसार-संग्रह ( महावीराचार्य )

आदिभाग :—

अलघ्य त्रिजगत्सार यस्याऽनतचतुष्टयं ।
नमस्तस्मै जिनेन्द्राय महावीराय तायिने ॥१॥
संख्याज्ञानप्रदीपेन जैनेन्द्रेण महत्विषा ।
प्रकाशितं जगत्सर्व्वं येन त प्रणमाम्यहं ॥२॥
प्रीणितः प्राणिसस्यौघो निरीतिन्निरवग्रहः ।
श्रीमताऽमोघवर्षेण येन स्वेष्टहितैषिणा ॥३॥
पापरूपाः परा यस्य चित्तवृत्तिहविर्भुजि ।
भस्मसाद्भावमीयुस्तेऽवंध्यकोपो भवेत्ततः ॥४॥
वशीकुर्वन् जगत्सर्व्वं योऽयं नानुवशः परैः ।
नाऽभिभूतः प्रभुस्तस्मादपूर्व्वमकरध्वजः ॥५॥
यो विक्रमक्रमाक्रातचक्रिचक्रकृतक्रियः ।
चक्रिकाभजनो नाम्ना चक्रिकाभंजनोऽञ्जसा ॥६॥
यो विद्यानद्यधिष्ठानो मर्यादावज्रवेदिकः ।
रत्नगर्भो यथाख्यातचारित्रजलधिर्महान् ॥७॥
विध्वस्तैकातपक्षस्य स्याद्वादन्यायवादिनः ।
देवस्य नृपतुंगस्य वर्द्धता तस्य शासनं ॥८॥
लौकिके वैदिके चऽपि तथा सामायिके च यः ।
व्यापारस्तत्रसर्वत्र सख्यानमुपयुज्यते ॥९॥
कामतंत्रेऽर्थशास्त्रे च गाधर्वे नाटकेऽपि वा ।
सूपशास्त्रे तथा वैद्ये वास्तुविद्यादिवस्तुषु ॥१०॥
छदोऽलकारकाव्येषु तर्कव्याकरणादिषु ।
कलागुणेषु सर्व्वेषु प्रस्तुतं गणित पुरा ॥११॥
सूर्यादिग्रहचारेषु ग्रहणे ग्रहसंयुतौ ।

त्रिप्रश्ने चन्द्रवृत्तौ च सर्व्वत्राऽङ्गीकृतं हि तत् ॥१२॥
द्वीपसागरशैलाना सख्या-व्यासपरिक्षिप· ।
भवनव्यंतरज्योतिर्लोककल्पाऽधिवासिना ॥१३॥
नारकाणा च सर्व्वेषा श्रेणीबद्धेन्द्रकोत्करा ।
प्रकीर्णकप्रमाणाद्या बुध्यते गणितेन ते ॥१४॥
प्राणिना तत्र सस्थानमायुरष्टगुणादय ।
यात्राद्यास्संहिताद्याश्च सर्वे ते गणिताश्रया' ॥१५॥
बहुभिर्विप्रलापैः किं त्रैलोक्ये सचराचरं ।
यत्किंचिद्वस्तु तत्सर्वं गणितेन विना न हि ॥१६॥
तीर्थकृद्भ्य· कृतार्थेभ्यः पूज्येभ्यो जगदीश्वरैः ।
तेषा शिष्यप्रशिष्येभ्य प्रसिद्धाद्गुरुपर्वत' ॥१७॥
जलधेरिव रत्नानि पाषाणादिव काचन ।
शुक्तेर्मुक्ताफलानीव सख्याज्ञानमहोदधेः ॥१८॥
किंचिदुद्धृत्य तत्सार वक्ष्येऽह मतिशक्तित· ।
अल्पग्रथमनल्पार्थं गणितं सारसग्रह ॥१९॥

इति सारसग्रहे गणितशास्त्रे महावीराचार्यकृतौ संज्ञाधिकारः समाप्तः ॥

**अन्तभाग .—**

कथमितिचेत् पको(एका)द्येकोतरत्यगच्छेनागतधनमुत्तरेण गुणयित्वा गत' लब्धं त्रिभिर्भक्त्वा तस्मिनगच्छे एकमपनीय गुणयित्वा तस्मिन् लब्धे मेलयित्वागतलब्धे एकाद्येकोत्तर गच्छधन ॥छ॥ [बम्बई ऐ० प० स० भ० प्रति

[ नोट—बम्बई सरस्वती भवनकी यह प्रति स० १५७५ वैशाख सुदि नवमी शुक्रवारकी लिखी हुई है और इसे मूलसघी बलात्कारगणके आचार्य ज्ञानकीर्तिके प्रशिष्य तथा रत्नकीर्तिके शिष्य यश·कीर्तिने स्वयं अपने हाथसे लिखा है। प्रति प्रायः शुद्ध और सुन्दर है परन्तु जीर्ण है और अधूरी जान पडती है। अन्तमें समाप्तिसूचक सधि तथा मूलग्रन्थ-प्रशस्तिका कोई भाग नहीं है। ऊपरके अन्तिम भागके अनन्तर ही लेखकप्रशस्ति लगी हुई है।]

## ११९. पुराणसार (श्रीचन्द्र मुनि)

**आदिभाग :—**

नत्वादितः सकल[तीर्थ]कृतः कृतार्थान् सर्वोपकारनिरतांस्त्रिविधेन नित्यम् ।
वक्ष्ये तदीयगुणगर्भमहापुराणं संक्षेपतोऽर्थनिकरं शृणुत प्रयत्नात् ॥१॥

**अन्तभाग :—**

धाराया पुरि भोजदेवनृपते राज्ये जयात्युच्चकैः(?)
श्रीमत्सागरसेनतो यतिपतेर्ज्ञात्वा पुराण महत् ।
मुक्त्यर्थं भवभीतिभीतजगता श्रीनन्दिशिष्यो बुधः
कुर्वे चारुपुराणसारममलं श्रीचन्द्रनामा मुनिः ॥१॥

श्रीविक्रमादित्यसंवत्सरे यशपूत्य(पंचाशीत्य ?)धिकवर्षसहस्रे (१०८५ ?) पुराणसाराभिधानं समाप्त ।

## १२०. शान्तिनाथ-पुराण ( भ० श्रीभूषण )

**आदिभाग :—**

सिद्ध सिद्धार्थससिद्धिदायक भुवनेश्वर ।
वन्दे सर्वगुणोपेतं प्रारब्धार्थप्रसिद्धये ॥१॥

× × × ×

रामसेनादयो नम्याः स्तुवेऽहं ज्ञानकोविदाः ।
पंचमे ज्ञानना(निनो)ऽतुल्याः दुर्मतध्वान्तनाशकाः ॥२४॥
नेमिसेनमुनीन्द्राय नमो नित्यं गुणात्मने ।
धर्माधर्मप्रदेशाय वादिने निष्कलात्मने ॥२५॥
अकलंककलाकम्र न्यायमार्गविशारद ।
वन्देऽहं दुर्मतध्वान्तनाशक सूर्यसन्निभ ॥२६॥
वाक्यं समन्तभद्रस्य दधेऽहं चित्तकैरवे ।
येन सूर्यायते नित्यं हृदयाम्बुजकोषके ॥२७॥

स्तुवे माधवभट्टस्य वाक्यं सन्देहमर्दक ।
येन जैनेन्द्रसिद्धान्तं दर्शितं भरतावनौ ॥२८॥
जीयाच्छ्रीजिनसेनश्च कविकोटिशिरोमणिः ।
अरीरचन्महाशास्त्र पुराण हरिवंशकं ॥२६॥
जिनसेनो लघुर्जीयात् पुराणरचने क्षमः ।
येन महापुराणाख्यमकरोद्विबुधाग्रणीः ॥३०॥
येन श्रीधर्मसेनेनाजीजयन्मकरध्वजः ।
विमलादिसेनको तावद्बभूव क्षितिविश्रुतः ॥३१॥
सार्थकोऽभूद्विशालश्चकीर्तिरुत्त[म]धारकः ।
तथा श्रीविश्वसेनश्च विश्वसेनो यथार्थवाक् ॥३२॥
विश्वसेनपद्माभोजबोधनैकदिवाकरः ।
विद्याभूषणसूरीन्द्र(न्द्रो) जीयताज्जगतीतले ॥३३॥
श्रीवीरवदनोत्पन्ना नमामि शारदा वरा ।
अंगपूर्वादिसंभूता गणेन्द्रशतधारिताम् ॥३४॥
चरित्र शांतिनाथस्य वक्ष्येऽहं भक्तितो वरं ।
चक्रिणः स्वात्मरूपस्य रम्य स्वस्याऽघहानये ॥३५॥

अन्तभाग :—

काष्ठासंघाचगच्छे विमलतरगुणे सारनंदीतटांके ।
ख्याते विद्यागणे वै सकलबुधजनैः सेवनीये वरेण्ये ।
श्रीमच्छ्रीरामसेनान्वयतिलकसमा नेमिसेनाः सुरेन्द्राः ।
भूयासुस्ते मुनीन्द्रा मलनिकरयुता भूमिपैः पूज्यपादाः ॥४५६॥
श्रीधर्मसेनो यतिवृन्दसेव्यः विराजते भूवलये नितान्तं ।
वैमल्यसेनोऽपि यथार्थनामा चारित्ररत्नाकर एव नित्यं ॥४५७॥
विशालकीर्त्तिश्च विशालकीर्तिर्जम्बूद्रुमाङ्के विमले सदैव ।
विभाति विद्यार्णव एव नित्यं वैराग्यपाथोनिधिशुद्धचेताः ॥४५८॥

श्रीविश्वसेनो यतिवृन्दमुख्यः विराजते वीतभयः सलीलः।
स्वतर्कनिर्नाशितसर्वडिम्भो विख्यातकीर्तिर्जितमारमूर्तिः ॥४५६॥
तत्पट्टविद्यार्णवपारगंता जीयात्पृथिव्या पृथुवृत्तवृत्तः।
विद्याविभूषोऽपि यथार्थनामा विद्याविनोदेन च लब्धकीर्तिः ॥४६०
विद्याभूषणपट्टकंजतरणिः श्रीभूषणो भूषणो
जीयाज्जीवदयापरो गुणनिधिः संसेवितो सज्जनैः।
काष्ठासंघसरित्पतिशशधरो वादी विशालोपमः
सद्वृत्तोऽर्कधरो(?)ऽतिसुन्दरतरो श्रीजैनमार्गानुगः ॥४६१॥
संवत्सरे षोडशनामधेये एकोनसत्पष्ठियुते (१६५६) वरेण्ये।
श्रीमार्गशीर्षे रचितं मया हि शास्त्र च वर्षे विमल विशुद्धं ॥४६२॥
त्र्योदशी सद्दिवसे विशुद्ध वारे गुरौ शान्तिजिनस्य रम्यं।
पुराणमेतद्विमलं विशाल जीयाच्चिरं पुण्यकरं नराणाम् ॥४६३॥युग्मं।
श्रीगूर्जरेऽप्यस्ति पुरं प्रसिद्ध सौजीत्रनामाभिधमेव सारं।
श्रीनेमिनाथस्य समीपमाशु चकार शास्त्रं जिनभूतिराम्यं(?)॥४६६॥
अस्य शास्त्रस्य विज्ञेयाः श्लोकाः चतुःसहस्रकाः।
पचविंशतिसंयुक्ता(४०२५) विज्ञेया लेखकैः सदा ॥४६७॥
इति श्रीशान्तिनाथ-पुराणे भट्टारकश्रीश्रीभूषणविरचिते शान्तिनाथ-समवसरणधर्मोपदेशमोक्षगमनवर्णनो नाम षोडशः सर्गः समाप्तः ॥१६॥

[ बम्बई ऐ० प० स० भ० प्रति

## १२१. वृषभदेवपुराण ( भ० चन्द्रकीर्ति )

आदिभाग :—

..............................।
..............................॥

अन्तभाग :—

श्रीकाष्ठसघेऽजनि रामसेनो नांदीतटांके नरदेवपूज्यः।
तदन्वये संयमभारधारि-श्रीविश्वसेनो मुनिपो बभूव ॥६०॥

तत्पट्टे किल शास्त्रज्ञो विद्याभूषणसूरिराट् ।
योऽभवत्परमार्थेन प्रसिद्धोऽवनिमंडले ॥६१॥
तत्पट्टाचलभास्करो गुणनिधिः शास्त्राब्धिपारंगतः
श्रीश्रीभूषण एव गौतमनिभो गच्छाधिराजः कवि–
स्तत्पट्टे किल चद्रकीर्तिमुनिपो भट्टारकाधीश्वर-
स्तेनेद रचितं पुराणमतुल नाभेयदेवस्य वै ॥६२॥
पुराण वृषभेशस्य पवित्रं पापनाशन ।
सज्जनान् प्रतिबोधाय निर्मितं चंद्रकीर्तिना ॥६३॥

इति श्रीत्रिभुवनैकचूडामणिश्रीमदृषभदेवपुराणे भट्टारकश्रीश्रीभूषण-पादपद्म-मधुकरायमान-भट्टारकश्रीचद्रकीर्तिप्रणीते वृषभदेव-निर्वाणगमनो नाम पंचविंशतिपर्व ॥ समाप्तमिदं ॥

[ बम्बई ऐ० प० स० भ० प्रति

## १२२. सुभग-सुलोचना-चरित ( भ० वादिचन्द्र )

**आदिभाग :—**

प्रणम्य शिरसाऽर्हन्तं स्फूर्जतं ज्ञानतेजसम् ।
सञ्चिताखिल-पापौघ-ध्वान्तध्वंसैककारणम् ॥१॥

**अन्तभाग :—**

विहाय पदकाठिन्य सुगमैर्वचनोत्करैः ।
चकार चरित साध्व्या वादिचन्द्रोऽल्पमेधसा ॥२॥
स्वस्ति [श्री]मूलसंघेऽस्मिन् पद्मनन्दीनमाश्रिताः ।
ते प्रपश्यन्ति सर्वान् [वै] किमत्राश्चर्यमद्भुतम् ॥३॥
देवेन्द्रस्त्वद्यशः पेतुः करैः धृत्वास्ववकीम् (?) ।
देवेन्द्रकीर्तिं ते वन्दे [द]मितानगसद्बलम् ॥४॥
विद्यानंदो हि शिष्याणा यत्पुरः पठतापुर(?) ।
नंनमीमि त्रिशुध्या त ध्यानं दिनश्वमाश्वरम् (?) ॥५॥

अपाकुर्वन्ति मतुलम्(?)मतामि[तो] मिथ्यादृशामिह ।
मानये मल्लिभूषाता·····विनिमण्डपम् (?) ॥६॥
लक्ष्मीलाभो हि यद्वाण्या प्रत्य[ह] जायते नृणाम् ।
लक्ष्मीचन्द्रं च तं चाये लीलालभितपातकम् ॥७॥
वीरचन्द्रं समाश्रित्य के मूर्खा न विदो मथत् (?) ।
तं [श्रये] त्यक्तसर्वान्नं दीप्त्या निर्जितकाचनम् ॥८॥

इति भट्टारकश्रीवादिचन्द्रविरचिते सुभगसुलोचनाचरित्ते नवमः परिच्छेदः ।

## १२३. षट्खण्डागम-टीका = धवला ( वीरसेनाचार्य )

आदिभाग :—

सिद्धमणंतमणिंदियमणुवममप्पुत्थ-सोक्खमणवज्जं ।
केवल-पहोह-णिज्जिय-दुण्णय-तिमिरं जिणं णमह ॥१॥
बारह-अंगग्गिज्झा वियलिय-मल-मूढ-दंसणुत्तिलया ।
विविह-वर-चरण-भूसा पसियउ सुय-देवया सुइरं ॥२॥
सयल-गण-पउम-रविणो विविहद्धि-विराइया विणिस्संगा ।
णीराया वि कुराया गणहर-देवा पसीयंतु ॥३॥
पसियउ मह धरसेणो पर-वाइ-गयोह-दाण-वरसीहो ।
सिद्धंतामिय-सायर-तरंग-संघाय-धोय-मणो ॥४॥
पणमामि पुप्फदंतं दुकयंतं दुण्णयंधयार-रविं ।
भग्ग-सिव-मग्ग-कंटयमिसि-समिइ-वइं सया दंतं ॥५॥
पणमह कय-भूय-बलिं भूयबलिं केस-वास-परिभूय-बलिं ।
विणिहयबम्मह-पसरं वड्ढाविय-विमलणाण-बम्मह-पसरं ॥६॥

अन्तभाग :—

जस्स से(प)साएण मए सिद्धंतमिदं हि अहिलहुंदी( हुदं )
महु सो एलाइरिओ पसियउ वरवीरसेणस्स ॥१॥

वंदामि उसहसेणं तिहुवण-जिय-बंधवं सिवं संतं।
णाण-किरणावहासिय-सयल-इयर-तम-पणासिय दिट्ठं ॥२॥

अरहंतपदो (अरहंतो) भगवंतो सिद्धा सिद्धा पसिद्ध आइरिया।
साहू साहू य महं पसियंतु भडारया सव्वे ॥३॥

अज्जज्जणंदि सिस्सेणुज्जुव-कम्मस्स चंदसेणस्स।
तह णत्तुवेण पंचत्थूहण्णयभाणुणा मुणिणा ॥४॥

सिद्धंत-छंद-जोइस-वायरण-पमाण-सत्थ-णिवुणेण।
भट्टारएण टीका लिहिएसा वीरसेणेण ॥५॥

अट्ठ(ठ)तीसम्हि सासिय(सतसए) विक्कमरायम्हि एसु-संगरामे।
वासेसु तेरसीए भाव(णु)विलग्गे धवल-पक्खे ॥६॥

जगतुंगदेव-रज्जे रियम्हि कुंभम्हि राहुणा कोणे।
सूरे तुलाए संते गुरुम्हि कुलविल्लए होंते ॥७॥

चावम्हि व(त)रणि-वुत्ते सिंघे सुक्कम्मि मीणे चंदम्मि*।
कत्तिय-मासे एसा टीका हु समाणिआ धवला ॥८॥

वोद्दणरायणरिंदे णरिंदचूडामणिम्हि भुंजंते।
सिद्धंतगंथमत्थिय गुरुप्पसाएण विगता सा ॥९॥

शब्दब्रह्मेति शाब्दैर्गणधरमुनिरित्येव राद्धान्तविद्भिः।
साक्षात्सर्वज्ञ एवेत्यवहितमतिभिस्सूक्ष्मवस्तुप्रणीतैः(वीणैः)
यो दृष्टो विश्वविद्यानिधिरिति जगति प्राप्तभट्टारकाख्यः।
स श्रीमान्वीरसेनो जयति परमतध्वान्तभित्तंत्रकार ॥१०॥

( इसके आगे ग्रन्थमें कनडी प्रशस्ति है। )

इति श्रीधवलप्रशस्तिः।

---

* आगे पृष्ठ १८७ के नोटमें उल्लेखित आराकी उस प्रशस्ति-प्रतिमें 'मीणे चंदम्मि' ही पाठ है 'नेमिचंदम्मि' जैसा अशुद्ध पाठ नहीं।

## १२४. कषायप्राभृत-टीका = जयधवला
### ( आचार्य वीरसेन, जिनसेन )

आदिभाग :—

जयइ धवलंगतेएणाऊरिय-सयलभुवणभवणगणो ।
केवलणाणसरीरो अणंजणो णामओ चंदो ॥१॥
तित्थयरा चउवीस वि केवलणाणेण दिट्ठसव्वट्ठा ।
पसियंतु सिवसरूवा तिहुवणसिरसेहरा मज्झं ॥२॥
सो जयइ जस्स केवलणाणुज्जलदप्पणम्मि लोयालोयं ।
पुढ पदिबिंबं दीसइ वियसिय-सयवत्त-गब्भगउरो वीरो ॥३॥
अंगंगबज्झणिम्मी अणाइमज्झंतणिम्मलगाए ।
सुयदेवय-अंबाए णमो सया चक्खुमइयाए ॥४॥
णमह गुणरयणभरियं सुअणाणामिय-जलोह-गहिरमपारं ।
गणहरदेवमहोवहिमणेय-णय-भग-भंगि-तुंग-तरंगं ॥५॥
जेणिह कसायपाहुडमणेयणयमुज्जलं अणंतत्थं ।
गाहाहि विवरियं तं गुणहरभट्टारयं वंदे ॥६॥
गुणहर-वयण-विणिग्गय-गाहाणत्थोवहारिओ सव्वो ।
जेणज्जमंखुणा सो सणागहत्थी वरं देउ ॥७॥
जो अज्जमंखुसीसो अंतेवासी वि णागहत्थिस्स ।
सो वित्तिसुत्तकत्ता जइवसहो मे वरं देउ ॥८॥

अन्तभाग :—

एत्थ समप्पइ धवलिय तिहुवणभवणुप्पसिद्धमाहप्पा ।
पाहुडसुत्ताणमिमा जयधवला-सण्णिया टीका ॥१॥
सुअदेवयाए भत्ती सुदोवजोगो य भाविओ सम्मं ।
आहवइ णाणसिद्धिं णाण-फलं चावि णिव्वाणं ॥२॥

णाणेण झाणसिद्धी झाणादो सव्व-कम्म-णिज्जरणं ।
णिज्जर-फल च मोक्खो णाणब्भासं तदो कुज्जा ॥३॥
इय भावियूण सम्मं सुदणाणाराहणा मये एसा ।
चिरभाविदा भयवदी पसियउ सा मज्झमचिरेण ॥४॥
उज्जोइदा य सम्म उज्जमिदा साहिदा य णित्थिण्णा ।
णिव्वूदा य भयवदी पसियउ सुअदेवया मज्झ ॥५॥
इति श्रीवीरसेनीया टीकासूत्रार्थ-दर्शिनी ।
वाटग्रामपुरे श्रीमद्गूर्ज्जरार्यानुपालिते ॥१॥
फाल्गुणे मासि पूर्वान्हे दशम्यां शुक्लपक्षके ।
प्रवर्धमान-पूजोरु-नन्दीश्वर-महोत्सवे ॥२॥
अमोघवर्षराजेन्द्र-प्राज्यराज्यगुणोदया ।
निष्ठिता प्रचयं यायादाकल्पान्तमनल्पिका ॥३॥
षष्टिरेव सहस्राणि(६००००)ग्रन्थाना परिमाणतः ।
श्लोकानुष्टभेनात्र निर्दिष्टान्यनुपूर्वशः ॥४॥
विभक्तिः प्रथमस्कंधो द्वितीयः सक्रमोदयौ ।
उपयोगश्च शेषास्तु तृतीयस्कंध इष्यते ॥५॥
एकान्नषष्ठिसमधिक-सप्तशताब्देषु(७५९) शकनरेन्द्रस्य ।
समतीतेषु समाप्ता जयधवला प्राभृत-व्याख्या ॥६॥
गुर्जरनरेन्द्रकीर्तेरन्तःपतिता शशाकशुभ्राया: ।
गुप्तैव गुप्तनृपतेः शकस्य मशकायते कीर्तिः ॥७॥
गुर्जरयशः पयोऽब्धौ निमज्जतीन्दौ विलक्षणं लक्ष्म ।
कृतमलि-मलिनं मन्ये धात्रा हरिणापदेशेन ॥८॥
भरत-सगरादि-नरपति-यशांसि तारानिभेन संहृत्य ।
गुर्जरयशसो महतः कृतोऽवकाशो जगत्सृजा नूनं ॥९॥
इत्यादिसकलनृपतीनतिशय्यपयःपयोधि-फेनेत्था ।
गुर्जरनरेन्द्रकीर्तिः स्थेयादाचन्द्रतारमिह भुवने ॥१०॥

जयत्यजय्यमाहात्म्यं विशासित-कुशासन ।
शासन जैनमुद्भासि मुक्तिलक्ष्म्यैक-शासनं ॥११॥
भूयादावीरसेनस्य वीरसेनस्य शासन ।
शासन वीरसेनस्य वीरसेनकुशेशयं ॥१२॥
आमीदासीददासन्न-भव्यसत्त्व-कुमुद्वतीम ।
मुद्वतीं कर्तुमीशो यः शशाङ्क इव पुष्कलः ॥१३॥
श्रीवीरसेन इत्यात्त-भट्टारक-पृथुप्रथः ।
पारदृश्वाधिविद्याना साक्षादिव स केवली ॥१४॥
प्रीणित-प्राणि-संपत्तिराक्रान्ताऽशेषगोचरा ।
भारती भारतीवाज्ञा षट्खण्डे यस्य नाऽस्खलत् ॥१५॥
यस्य नैसर्गिकीं प्रज्ञा दृष्ट्वा सर्वार्थगामिनीम् ।
जाताः सर्वज्ञसद्भावे निरारेका मनीषिणः ॥१६॥
य प्राहुः प्रस्फुरद्बोध-दीधिति-प्रसरोदयम् ।
श्रुतकेवलिन प्राज्ञाः प्रज्ञाश्रमणसत्तमम् ॥१७॥
प्रसिद्ध-सिद्ध-सिद्धान्त-वार्धिवार्धौत-शुद्धधीः ।
सार्द्धं प्रत्येकबुद्धैर्यः स्पर्धते धीद्धबुद्धिभिः ॥१८॥
पुस्तकाना चिरन्ताना गुरुत्वमिह कुर्वता ।
येनातिशयिताः पूर्वे सर्वे पुस्तक-शिष्यकाः ॥१९॥
यस्तपोदीप्तकिरणैर्भव्याम्भोजानि बोधयन् ।
व्यद्योतिष्ट मुनीनेनः पञ्चस्तूपान्वयाम्बरे ॥२०॥
प्रशिष्यश्चन्द्रसेनस्य यः शिष्योऽप्यार्यनन्दिनाम् ।
कुलं गणं च सन्तान स्वगुणैरुदजिज्वलत् ॥२१॥
तस्य शिष्योऽभवच्छ्रीमान् जिनसेनः समिद्धधीः ।
अविद्धावपि यत्कर्णौ विद्धौ ज्ञान-शलाकया ॥२२॥
यस्मिन्नासन्नभव्यत्वान्मुक्तिलक्ष्मीः समुत्सुका ।
स्वयंवरीतुकामेव श्रौति मालामयूयुजत् ॥२३॥

येनानुचरिता( त ) बाल्याद् ब्रह्मव्रतमखण्डितम्।
स्वयम्बरविधानेन चित्रमूढा सरस्वती ॥२४॥
यो नातिसुन्दराकारो न चातिचतुरो मुनिः।
तथाप्यनन्यशरणा यं सरस्वत्युपाचरत् ॥२५॥
धी शमो विनयश्चेति यस्य नैसर्गिकाः गुणाः।
सूरीनाराधयति स्म गुणैराराध्यते न कः ॥२६॥
य. कृशोऽपि शरीरेण न कृशोऽभूत्तपोगुणैः।
न कृशत्वं हि शारीरं गुणैरेव कृशः कृशः ॥२७॥
ये ( यो ) नाग्रहीत्कापलिकान्नाऽप्यचितयदजसा।
तथाऽप्यध्यात्मविद्याब्धेः पर पारमशिश्रियत् ॥२८॥
ज्ञानाराधनया यस्य गतः कालो निरन्तरम्।
ततो ज्ञानमय पिण्ड यमाहुस्तत्त्वदर्शिनः ॥२९॥
तेनेदमनतिप्रौढ-मतिना गुरुशासनात्।
लिखितं विशदैरेभिरक्षरैः पुण्यशासनम् ॥३०॥
गुरुणार्धे ऽग्रिमे भूरिवक्तव्ये सप्रकाशिते।
तन्निरीक्ष्याल्प-वक्तव्यः पश्चार्धस्तेन पूरितः ॥३१॥
प्राय प्राकृतभारत्या क्वचित्संस्कृतमिश्रया।
मणि-प्रवाल-न्यायेन प्रोक्तोऽयं ग्रन्थविस्तरः ॥३२॥
ग्रन्थच्छायेति यत्किंचिदत्युक्तमिह पद्धतौ।
क्षन्तुमर्हथ तत्पूज्या दोष ह्यर्थी न पश्यति ॥३३॥
गाथासूत्राणि सूत्राणि चूर्णिसूत्र तु वार्तिकम्।
टीका श्रीवीरसेनीया शेषा. पद्धतिपंजिकाः ॥३४॥
ते सूत्रसूत्र-तद्वृत्ति-विवृती वृत्ति-पद्धती।
कृत्स्नाकृत्स्नश्रुतव्याख्ये ते टीकापंजिके स्मृते ॥३५॥
अत्युक्तं किमिहास्त्यनुक्तमथवा किं वा दुरुक्तादिकं
सर्वज्ञोदित-सन्तत-प्रवचने प्रस्पष्टमृष्टाक्षरे।

तत्सूत्रार्थ-विवेचने कतिपयैरेवाक्षरैर्मादृशा-
मुक्तानुक्तदुरुक्तचिन्तनपरा टीकेति कः संभवः ॥३६॥
तत्पूर्वापरशोधनेन शनकैर्यन्मादृशा टीकनं
सा टीकेत्यनुगम्यतां बुधजनैरेषा हि नः पद्धतिः ।
यत्किंचिच्च दुरुक्तमत्ररचितं छाद्मस्थ्य-दोषोदयात्
तत्सर्वं परिशोध्यमागमधनैर्ग्राह्यं च यन्निस्तुषं ॥३७॥
श्रीवीरप्रभु-भाषितार्थघटना निर्लोडितान्यागम-
न्यायाच्छ्रीजिनसेन-सन्मुनिवरैरादेशितार्थस्थितिः ।
टीका श्रीजयचिह्नितोरुधवला सूत्रार्थसंद्योतिनी
स्थेयादारविचन्द्रमुज्ज्वलतपःश्रीपालसंपादिता ॥३८॥
सर्वज्ञप्रतिपादितार्थगणभृत्सूत्रानटीकामिमां
येऽभ्यस्यंति बहुश्रुता श्रुतगुरुं संपूज्य वीरप्रभुं ।
ते नित्योज्ज्वलपद्मसेनपरमाः श्रीदेवसेनार्चिताः
भासन्ते रविचन्द्रभासिसुतपाः-श्रीपालसत्कीर्तयः ॥३९॥

इति श्रीजयधवलप्रशस्तिः

[नोट—धवला और जयधवला टीकाओंकी ये दोनों प्रशस्तियां नात्या-नेमिनाथजी पांगल वार्मीने मूडबिद्रीमें गुरुबस्ति-स्थित श्रीसिद्धान्तशास्त्रों-परसे ता० २० अगस्त सन् १६१२ को दिनके १०॥ बजेसे १२॥ बजे तकके समयके भीतर उतारकर जैनसिद्धान्तभवन आराको भेजी थीं। इन्हीं प्रशस्ति-प्रतिपरसे अनेकान्त सन् १६२० में इन्हें उद्धृत किया गया था। बादको सिद्धान्त शास्त्रोंके इधर आजानेपर सहारनपुर तथा आराकी ग्रन्थ-प्रतियों और मुद्रित प्रतियों प्रस्तावना परसे इनका संशोधन किया गया है।]

## १२५. आराधना-पताका ( वीरभद्राचार्य )

**आदिभाग**—

निरु-मुनरियमुण-माहप्पदिप्प-मुणगाय-रिद्धि-वित्थारो ।
जयइ सुरनाह-पूइय-मुरु-मारणो महावीरो ॥१॥

अन्तभाग :—

इय सुदराइं वीरभद्दभणियाइं पवयणाहिंतो ।
चिरमुच्चिणि सुए एसा रइया आराहणापडिया ॥८५॥
वण्णाणमाणुपुव्वी गाहद्धपयाण पाययाण च ।
कत्थइ कहिंचि रइया पुव्वपसिद्धाण समईए ॥८६॥
आराहणापसत्थमि एत्थ सत्थमि गंथ(थ)परिमाण ।
नउयाइं नवसयाइ (६६०)अत्था गाहमि गाहाणं ॥८७॥
विक्कमनिवकालाओ अट्ठुत्तरिमे समासहस्संमि (१००८) ।
एसा सव्व गिहिआ गहिया गाहाहिं सरलाहिं ॥८८॥
मोहेण मदमइणा इममि जमणागमं मए लिहियं ।
त महरिणो मरिसिंतु अहवा सोहिंतु करुणाए ॥८६॥
भवगहणभमणरीणा लहति निव्वुइसुह जमल्लीणा ।
त कप्पद्दुमसुहयं नदउ जिणसासणं सुइर ॥६०॥
[इति] आराधनापताका कृतिरिय श्रीवीरभद्राचार्यस्य ॥छ॥

## १२६. रिट्ठ-समुच्चय-शास्त्र ( दुर्गदेव )

आदिभाग :—

पणमंत-सुराऽसुर-मउलि-रयण-वर-किरण-कति-वित्थुरिअं ।
वीर-जिण-पाय-जुअल णमिऊण भणेमि रिट्ठाइ ॥१॥

अन्तभाग :—

जयउ " जियमाणो सजमदेवो मुणीसरो इत्थ ।
तह विहु सजमसेणो माहवचदो गुरू तह य ॥२५४॥
रइयं वहु सत्यत्थ उवजीवित्ता हु दुग्गदेवेण ।
रिट्ठसमुच्चयसत्थ वयणेण [सजगाइ]देवस्स ॥२५५॥
जं इह किपि वि रि(दि)ट्ठं अयाणमाणेण अहव गव्वेण ।
तं रिट्ठ-सत्थ-णिउणा सोहेवि महीइ पयडंतु ॥२५६॥

जो छद्दंसण-तक्क-तक्किय-इमं पंचंग-सद्दागमे
जोगी सेसमहीसनीतिकुसलो वाइब्भकंठीरवो।
जो सिद्धंतमपारती(णी)रसुणिही तीरे वि पारंगओ
सो देवो सिरिसजमाइमुणिवो आसी इह भूतले ॥२५७॥
संजाओ इह तस्स चारुचरिओ णाणंबुघोयं मई-
सीसो देसजई सबोहणपरो णीसेस-बुद्धागमो।
णामेण सिरिदुग्गदेव-विइओ वागीसरा यन्नओ
तेणेदं रइयं विसुद्धमइणा सत्थ महत्थ फुडं ॥२५८॥
जा धम्मो जिणदिट्ठणिच्चयपवे(हे) वट्टति नावज्जई
जा मेरू सुरपायवेहिं सरिसो जाव महीसा मही।
जा णाय च सुरा णमोत्ति पहुणा चदक्कतारागणं
तावेत्थो महीफलमि विदिट्ठं(?)दुग्गस्स सत्थं जसो ॥२५६॥
संवच्छरइगसहसे वोलीणे णवयसीइ-सजुत्ते (१०८६)।
सावण-सुक्के यारसि दियहम्मि मूलरिक्खम्मि ॥२६०॥
सिरिकुंभणयरणए(?) लच्छिणिवास-णिवइ-रज्जम्मि।
सिरिसंतिणाहभवणे मुणिभवियस्स उभे रम्मे(?) ॥२६१॥
इति रिट्ठसमुच्चयसत्थं सम्मत्तं।

## १२७. अर्घकाण्ड ( दुर्गदेव )

**आदिभाग :—**

णमिऊण वड्ढमाणं संजमदेवं णरिंद-थुय-चलणं।
वोच्छामि अग्घकंडं भवियाण हिय पयत्तेणं ॥१॥
वर-गुरु-परंपराए कमागयं एत्थ सयल-सत्थत्थ।
दट्ठूण मणुयलोए णिद्दिट्ठं दुग्गदेवेण ॥२॥

**अन्तभाग :—**

आसी एत्थ महीयले सुविदिदो सत्थत्थ-पारं-गओ।
णामेणं सिरि-संजमाइ-विबुहो वाइब्भगन्धीयरो ॥१४३॥

सीसो तस्स धराधराणमिउ(भिणओ ?) सत्थत्थ-णिद्दिस्सणो
णामेण सिरिदुग्गदेवसुकई चारित्तचूडामणी।
कित्ती जस्स तिलोयमंडवणलं सड्ढाइज(जा)णं(?)ट्ठिया
सव्वाणं सुहि-सत्थदं सुविदिदं तेणग्घकंड कयं ॥
इदि सिरिदुग्गदेव-विरइय अग्घकंडं समत्तं।

## १२८. परमागमसार (श्रुतमुनि)

आदिभाग :—

घाइ-चउक्क-विरहिया अणंत-णाणाइ-गुण-गण-समिद्धा।
चदक्क-कोडि-भासिद-दिव्वंगजिणा जयतु जये ॥१॥
दस सहजादादिसया घायिक्खयदो दु संभवा दस हि।
देवेहिं कयमाणा चोद्दस सोहंति वीरजिणे ॥२॥
दिव्वज्झुणी सुदु दहि छत्तत्तय सिंहविट्ठरं चमरं।
राजंति जिणे वीरे भावलयमसोग कुसुमविट्ठी य ॥३॥
( आगे सिद्धादि पंचपरमेष्ठियोंकी स्तुति की गई है।)
एवं पंचगुरूणं वंदित्ता भविय-णिवह-बोहत्थं।
परमागमस्स सारं वोच्छे हं तच्च-सिद्धियरं ॥८॥
पंचत्थिकाय दव्वं छक्कं तच्चाणि सत्त य पदत्था।
णव बंधो तक्कारण मोक्खो तक्कारणं चेदि ॥९॥
अहियारो अट्ठविहो जिणवयण-णिरूविदो सवित्थरदो।
वोच्छामि समासेण य सुणुय जणा दत्तचित्ता हु ॥१०॥

अन्तभाग :—

जो परमागमसारं परिभावइ चत्त-रागदोसो हु।
सो विरहिय-परभावो णिव्वाणमणुत्तरं लहइ ॥२२२॥
इदि परमागमसारं सुयमुणिणा कहियमप्प-बोहेण।
सुदणिउणा मुणिवसहा दोसच्चुदा सोहयंतु फुडं ॥२२३॥

सगगा(का)ले हु सहस्से विसय-तिसट्ठीगदे(१२६३) दु विसवरिसे ।
मग्गसिर-सुद्धसत्तमि गुरुवारे गथ संपुण्णो ॥२२४॥
अणुवद-गुरु-बालेंदू महव्वदे अभयचंदसिद्धति ।
सत्थेऽभयसूरि-पभा(हा)चंदा खलु सुयमुणिस्स गुरू ॥२२५॥
सिरिमूलसंघ-देसियगण-पुत्थयगच्छ-कोंडकुंदाणं ।
परमण्ण-इंगलेसर-वलिम्मि जादस्स मुणिपहाणस्स ॥२२६॥
सिद्धंताहयचंदस्स य सिस्सो बालचंदमुणिपवरो ।
सो भविय-कुवलयाणं आणंदकरो सया जयउ ॥२२७॥
सद्दागम-परमागम-तक्कागम-णिरवसेसवेदी हु ।
विजिद-सयलण्णवादी जयउ चिरं अभयसूरिसिद्धंति ॥२२८॥
णय-णिक्खेव-पमाणं जाणित्ता विजिय-सयल-परसमओ ।
वरणी(णि)वइ-णिवह-वंदिय-पय-पम्मो चारुकित्तिमुणी ॥२२९॥
वरसारत्तयणी(णिउ)णो सुद्धप्परओ विरहिय-परभावो ।
भवियाणं पडिबोहण-परो पहाचंदणाममुणी ॥२३०॥

[इति] श्रीमत्श्रुतमुनि-विरचित-परमागमसारः समाप्तः ।

[ बम्बई ऐ० प० स० भ० प्रति

## १२९. भावसंग्रह ( श्रुतमुनि )

**आदिभाग :—**

खविदघणघाइकम्मे अरहते सुविदिदत्थ-णिवहे य ।
सिद्धट्ठगुणे सिद्धे रयणत्तयसाहगे थुवे साहू ॥१॥
इदि वदिय-पंचगुरू सरूवसिद्धत्थ भवियबोहत्थ ।
सुत्तुत्तं मूलुत्तर-भावसरूवं पवक्खामि ॥२॥

**अन्तभाग :—**

इदि गुणमग्गणठाणे भावा कहिया पबोह-सुयमुणिणा ।
सोहंतु ते मुणिंदा सुयपरिपुण्णा दु गुणपुण्णा ॥११६॥

( इसके बाद 'अणुवदगुरुत्रालेंदू' से लेकर -'णय-णिक्खेव-पमाण' तक ५ गाथाएं वे ही हैं जो परमागमसारकी प्रशस्तिमें पृ० १६१ पर दर्ज हैं।)

णाद-णिखिलत्थ-सत्थो सयल-णरिंदेहिं पूजिओ विमलो ।
जिण-मग्ग-गमण-सूरो जयउ चिरं चारुकित्तिमुणी ॥१२२॥
वर-सारत्तय-णिउणो सुद्धं परओ विरहिय-परभाओ(वो)।
भवियाण पडिबोहणपरो पहाचंदणाममुणी ॥१२३॥

[ नोट—आराके जैनसिद्धान्त-भवनकी ताड्पत्रीय प्रतिमें ११६ वीं गाथाके बाद 'इतिभावसंग्रहः समाप्तः' लिखकर अन्तकी ये ७ गाथाए प्रशस्तिरूपसे दी हैं, जब कि मा० ग्र० मा० के 'भावसंग्रहादि' ग्रन्थमें 'भावत्रिभगी'के नामसे संग्रहीत इस ग्रन्थमें वे नहीं पाई जातीं । ]

## १३०. आयज्ञानतिलकसटीक ( भट्ट वोसरि )

आदिभाग :—

नामिऊण नमियनमियं दुत्तरसंसारसायरुत्तिन्नं ।
सव्वन्न वीरजिणं पुलिंदिणिं सिद्धसघ च ॥१॥
जं दामनन्दिगुरुणो मणयं आयाण जाणि [यं] गुज्झं ।
तं आयनाणतिलए वोसरिणा भन्नए पयडं ॥२॥ (मूल)

सिद्धान्ध्वजादिचिरसूत्रितनामधेयान् सर्वाङ्गसौहृदशुभस्थितिसौम्यपातान् ।
स्वस्वामिसद्ग्रहयुतेक्षित-फुल्लपूर्णानायान्प्रणम्य बलिनः शुभकार्यसिद्धयै ॥१

शर्वाय शास्त्रसारेण यत्कृतं जनमडन ।
तदायज्ञानतिलकं स्वय विव्रियते मया ॥२॥ (स्वो० टीका)

अन्तभाग :—

विमलविहूसियदेहो जो नग्गाइ(?)माणुसो शुइ पढइ ।
स पुलिंदिणि घाणइ सया आयाण तस्स तन्नाणं ॥५॥ × × ×

इति श्रीदिगम्बराचार्य-पंडितश्रीदामनदि-शिष्य-भट्टवोसरि-विरचिते सायश्रीटीकायज्ञानतिलके चक्रपूजाप्रकरण समाप्तं ॥२५॥

## १३१. अध्यात्मतरङ्गिणी-टीका ( गणधरकीर्ति )

आदिभाग —

शुद्धध्यानकृशानुधूमनिवहः स्त्रासैर्भृशं कुंचितो
मौलौ नीलविलोलमूर्ध्वजजटाव्याजेन येषां बभौ।
ज्ञानानन्ददृगात्मकामरकतस्वर्णांदुसद्विद्रुमा—
नीलांभोदनिभा भवन्तु सुजिनास्ते स्वात्मलम्भाय नः ॥१॥

विचित्रोरुदेहद्युतिद्योतिताशा नरेन्द्रोद्धकोटीररत्नप्रभाभा—
रभूयिष्ट पाथ. प्रधौतांड्घ्रियुग्मा जिना. संददन्तां फलं वांछित नः ॥२॥

अरूपारसासीमविज्ञानदेहाऽशरीराः परानन्तवीर्यावगाहा—
तिसूक्ष्मामलानन्तसौख्या विबाधा. प्रसिद्धाः सुसिद्धा· प्रयच्छन्तु शं न. ॥३॥

मनोज्ञार्थचिन्तामणिश्रीनिवासं पवित्रं चरित्रं समं ये दृगाद्यम्।
स्वयं सञ्चरन्तेऽन्यमाचारयन्ते भवन्त्विष्टिदाः सूरयः सर्वदा न, ॥४॥

अनेकान्ततत्त्वांबुजोद्भाससूर्याः सदैकान्तमिथ्यातमोध्वंसवर्या. ।
पराध्यापका, पाठकान् पाठयन्त. प्रबोधं दधन्तां शुभं शाश्वतं न. ॥५॥

त्रिदण्डप्रमुक्ता. सुयोगोपयुक्ता. प्रमादोज्झिताः सिद्धशुद्धोपयोगाः।
सुश्रृङ्गारयोनीनस्वर्भानुभावा. सदा साधवः संतु ते सिद्धिदा न. ॥६॥

अघौघ-संघट्टितविघ्न-संघ-विघातका मारमहेभसिंहा ।
भवन्तु पञ्चापि जिनेश्वराद्या. सुशाश्वत वैबुधसम्प्रधार्यै ॥७॥

सल्लक्षणोज्ज्वलतनुर्वरतर्कबाहु. स्याद्वादपीवरपयोधरभारभुग्ना ।
मुक्तात्मवृत्तसदलंकृतिहारभूषा वाग्देवता मम तनोतु मनीषितानि ॥८॥

गुणिगणधरकीर्ति सोमसेनोपरोधा—
दकृत निकृतिदोषांध्वान्तविध्वसकर्त्रीम्।
दिनमणिरुचिभावा भासितार्था सुटीका,
श्रुतममृततरङ्गिण्याख्ययाध्यात्मपूर्वाम् ॥९॥

कुन्देन्दुकांतिहरहासविलासशुभ्रं, कांतं यशः प्रतिविधातुमनल्पकल्पम् ।
कस्त्रै. स्वरैरवितथार्थविचारसारा, साक्षान्मया विरचिता शिवसौख्यदेयम् ॥१०॥

मात्सर्यमुत्सृज्य विचार्य चार्य्या सत्तत्वसंदेशनजं गुणौघम् ।
ग्राह्यागुणज्ञैर्गुणकस्तदत्तैः सन्मोक्षमार्गाधिगमाय टीका ॥११॥

जिनं प्रणम्य प्रणतं सुरेशैः कृते कृतार्थैं मुनिसोमदेवैः ।
मया स्वभक्त्या क्रियते विचित्रं निबंधनं ध्यानविधौ सुबोधम् ॥१२॥

निखिलसुरासुरसेवावसरमायातसुरसम्बोधनावधारितधर्मावसरण (णं) अमरोरगनरेन्द्रश्रीकल्पानोकहारामोल्लासामृताम्भोधरायमाण ( णं ) महा-परमपञ्चकल्याणकोकनदकाननोत्पत्तिसार (रं) भवाम्भोधिसमुत्तरणैकसेतुबन्धं सम्यक्त्वरत्नं गीर्व्वाणगणा [न] नुग्राहयता, अष्टादशसागरोपमकोटीकोटीं वा यावन्नष्टत्वाद्दयादमत्यागादिस्वभावस्य धर्मस्य भरते धर्मकर्माणि प्रवर्तयन् [तु]भगवानिति जाताकूतपरिपाकेन समाधि(वि) र्भविष्यदासन्नमृत्युं वैराग्य-योग्या(गा)य नीलंयसा प्रहिता गीर्व्वाणेश्वरेण, ता च शृङ्गारादिरसाभिनयदक्षां हाव-भाव-विभ्रमविलासवर्ती शान्तरसानन्तरमेव नश्वरस्वभावा विभाव्या-स्यनोऽनश्वरस्वभावतां चिकीर्षुरादिदेव इत्थं योगमुद्रा मुन्मुद्रितवानित्याह—

अन्तभाग —

श्रीसोमदेवमुनिनोदितयोगमार्गो व्याख्यात एव हि मया स्वमतेर्बलेन ।
संशोध्य शुद्धधिषणैर्हृदये निधेयो योगीश्वरोत्वमचिराय समाप्तुकामैः ॥१॥

[श्री] सोमसेनप्रतिबोधनार्थं धर्माभिधानोन्नयशःस्थिरार्था. ।
गूढार्थसंदेहहरा प्रशस्ता टीका कृताऽध्यात्मतरङ्गिणीयम् ॥२॥

जिनेशसिद्धाः शिवभावभावा सुसूरयो देशकसाधुनाथा. ।
अनाथनाथा मथितोरुदोषा भवंतु ते शाश्वतशर्म्मदा नः ॥३॥

चंचत्चंद्रमरीचिवीचिरुचिरे यच्चारुरोचिश्चये,
नम्राङ्गै सुरनायकैः सुररुचे देवाब्धिमध्यैरिव ।
शुक्लध्यानसितासिशासितमहाकर्मारिकक्षोदयो—
देयात्तेऽभव संभवा शुभतमां चंद्रप्रभः संपदम् ॥४॥

त्रिदशवसतितुल्यो गुर्जरात्राभिधानो धनकनकसमृद्धो देशनाथोऽस्ति देशः।
असुरनरसुरामाशोभिभोगाभिरामो परदिगवनिनारीवक्त्रभाले ललामः ॥५॥

शश्वच्छ्रीशुभतुङ्गदेववसतिः संपूर्णपण्यापणा—
शौण्डीयोद्भटवीरधीरविततां श्रीमान्यखेटोपमा।
चंचत्कांचनकुम्भकर्णविसरैर्जैनालयैर्भ्राजिता,
लंका वास्ति विलासशालनिलयामंदोदरीशोभिता ॥६॥

वरवटवटपल्ली तत्र विख्यातनामा वरविबुधसुधामा देववासोरुधामा।
शुभसुरभिसुरम्भादेवरम्भाभिरामा सुरवसतिरिवोच्चैरप्सरोभासमाना ॥७॥

स्फूर्जद्बोधगणेभवद्यतिपतिर्वाचंयमः संयमी,
जज्ञे जन्मवतां सुपोतममलं यो जन्मयादोविभोः।
जन्यो यो विजयी मनोजनृपते जिंष्णोर्जगज्जन्मिनाम्,
श्रीमत्सागरनंदिनामविदितः सिद्धांतवार्धेर्विधुः ॥८॥

स्याद्वादसात्मकतपोवनितालत्तामो भव्यातिसस्यपरिवर्द्धनतीरदाभः।
कामोरुभूरुहविकर्तनसंकुठारस्तस्माद्विलोभहननोऽजनि स्वर्णनन्दी ॥९॥

तस्माद् गौतममार्गगो गुणगुणैर्गम्यो गुणिग्रामणी—
र्गीतार्थो गुरुसंगनागगरुडो गीर्वाणगीर्गोचरः।
गुप्तिग्रामसमग्रतापरिगतः प्रोग्रग्रहोद्गारको,
ग्रन्थग्रंथिविभेदको गुरुगमः श्रीपद्मनन्दी मुनिः ॥१०॥

आचार्योचितचातुरीचयचितश्चारित्र चन्चुःशुचि—
श्चार्वीसंचयचित्रचित्ररचनासंचेतनेनोच्चकैः।
चित्तानन्दचमत्कृतिप्रविचरन्प्राञ्जप्रचेतोमतां,
प्राभूच्चारुविचारणैकनिपुणः श्रीपुष्पदन्तस्ततः ॥११॥

समभवदिह चातश्चन्द्रवत्कायकान्तिस्तदनुविहितबोधो भव्यसत्कैरवाणाम्।
मुनिकुवलयचन्द्रः कौशिकानन्दकारी, निहिततिमिरराशिश्चारुचारित्ररोचिः॥१२

तस्मात्तीव्रमहातपस्तपनकृत्तेजः प्रतप्तान्तरम्।
कर्म्मोत्तुङ्गताडगतारलहरीतोयं तरां शोषितम्।

रत्यामाचरणे शुचौ रतिपतिर्येनोत्पतंगी कृत, ।
कीर्त्या शारदनीरदेन्दुसितया श्वेतीकृताशामुख. ॥१३॥

भवभयपरिभावी भव्यराजीवबन्धु—
र्मतमितहितवादी बुद्धिवादावनन्दी ।
गुणिगणधरकीर्ति कोविदानन्दहेतु. ।
समजनि जनपूज्यो वन्दिवृन्दाभिवंद्य. ॥१४॥

आसन्नभव्यशुभसस्यविभूतिकर्त्रीं सारार्थदेशनपरा चिरमेघमालाम् ।
सार्द्रान्तर. ससमयो निखिलाशपूरस्तस्तार यद्वदिह तद्वदिमा सुटीकाम् ॥१५॥

तथ्यात्माद्यर्थसम्वादाध्यात्मामृततरङ्गिणीम् ।
सोमदेवध्यानविधौ गणधरकीर्तिर्व्यधात् ॥१६॥

एकादशशताकीर्णे नवासीत्युत्तरे परे ।
सम्वत्सरे शुभे योगे पुष्यनक्षत्रसंज्ञके ॥१७॥

चैत्रमासे सिते पक्षेऽथ पञ्चम्यां रवौ दिने ।
सिद्धा सिद्धिप्रदा टीका गणभृत्कीर्तिविपश्चित. ॥१८॥

निर्स्त्रिंशतर्जितारातिविजयश्रीविराजनि ।
जयसिंहदेवसौराज्ये सज्जनानन्ददायिनि ॥१९॥

यावज्जैनं श्मसनं शासनानां, जीवादीनां स्यादनेकात्मकानाम् ।
यावद्द्यौर्गौर्गोपतिर्यावदाशा स्थेयाट्टीका तावदेषा जगत्याम् ॥२०॥

## १३२. चन्द्रप्रभपुराण (पं० शिवाभिराम)

आदिभाग —

श्रीमते परमज्ञान-साम्राज्य-पदभागिने ।
नमोऽर्हते महाभर्त्रेऽनंतसंसृतिभीमुषे ॥१॥

अनादिनिधनानन्तज्ञानानंदैकमूर्तये ।
जगता स्वामिने कर्त्रे नमो त कुलकृत्तुजे ॥२॥

तमीश स्वामिनं वन्दे सुरतारागणावृत ।
स्ववाक्किरणसन्दोह-सुनन्दित-जगत्त्रयम् ॥३॥

अनेकान्तमतिः कुर्यादनन्यगुणगौरव. (वं)।
सिद्ध्यर्थदायिनी शांतिरसावतुलविक्रमी ॥४॥
सोऽस्तु श्रीमन्महावीर सतां सिद्धौ जगत्त्रये।
यन्नामश्रुतिमात्रेण भजन्ति भविन. सुखम् ॥५॥
त्रिश्रीसमन्वितान् शेषान् पुराणार्थ-प्रकाशकान्।
जिनाधिपानहं नौमि तत्सुखाप्त्यै सुखाकरान् ॥६॥
जिनेन्द्रचक्रजां वन्दे सप्तभंगांगवादिनीम्।
केवलज्ञान-जननीं तु स्तुत्यां सम्यक्सरस्वतीम् ॥७॥
योग्यतां यांति यास्यन्ति सत्पदं पुरुषोत्तमा.।
यामाराध्य समाराध्यामाराध्यैस्तां स्तुवेऽनघाम् ॥८॥
रत्नत्रयधरान्वन्दे बाह्याभ्यन्तरभेदतः।
सर्वसंगविनिमुक्तान् गुरून्सद्गुणगौरवान् ॥९॥
विष्ण्वादिभद्रबाह्वन्तानां पादस्मरणं सदा।
करोमि सिद्धये कृत्स्नश्रुतकेवलिनामहं ॥१०॥
श्रीमत्समन्तभद्रस्य जयन्ति वचनान्यलं।
यत्समुद्योतिते मार्गे न स्खलन्ति महाधिय. ॥११॥
अकलंकगुरुः केन भुवने न प्रणम्यते।
यद्वाक्शरैश्च बौद्धानां बुद्धिर्वैधव्यतां गता ॥१२॥
पुराणसंततिर्यस्य स्वगते प्रस्फुटं गता।
स्मरामि जिनसेनस्यांघ्री यौ सद्भिः प्रवंदितौ ॥१३॥
पद्मनन्द्यादयः सर्वे पूज्ये ज्याः सत्सूरयः सुरैः।
संस्तुतास्ते दिशंत्वत्र मतिंसर्वार्थभासिनीम् ॥१४॥
स्वसिद्ध्यर्थं नमस्कृत्य देव-श्रुत-मुनीश्वरान्।
वच्मि चन्द्रप्रभस्येदं पुराणं च पुलाकत. ॥१५॥
गुणभद्रादिभिपूज्यैर्भदन्तैर्यन्निरूपितम्।
तत्करोमि विशङ्कोऽहं तत्पादाम्बुजसेवनात् ॥१६॥

अन्तभाग :—

श्रीमत्कुम्भमहाविशुद्धनगरे जैनास्पदैर्वासिते,
शुद्धश्रीद्धमहाजनप्रभृतिभिर्न्नित्य च सद्भावत ।
तारासिंह इतिह्यभून्नृपशिरोरत्नप्रभाचुम्बित-
पादाम्भोज-मनोहर-द्यु तिवर. शत्रूत्तमार्गैर्न्नत. ॥५१॥

श्रीमदवृहद्गौर्जरवंशभूषण. प्रतापसंतापित-शत्रुशासन ।
ताराहरि: क्षत्रियवृत्तिचन्द्रमा विशुद्धमार्गाधिपतिर्ज्जयत्यसौ ॥५२॥
तत्सत्पदाम्बुजविभूषणमित्रमूर्तिविऽद्वे षमेकपरिशोषणमित्रमूर्ति. ।
अन्यायमार्गकुमुद्यु ति-मित्रमूर्ति. पुत्रो वभूव बलवान् रणमल्ल एष ॥५०॥
दिल्ली-नृपेशाधिपति-प्रमान्य शौर्य्यादिभि. ख्यातगुणैर्गरीयान् ।
पट्टे तदीये जिनशुद्धमार्गी सामन्तसिंहो नृपराजराज. ॥५४॥
दिगम्बराचार्यगुरो. प्रसादान्मलक्षयाप्तजिनेन्द्रधर्म. ।
अपारभट्टावलि-वंदित. सत्सामन्तसिंह: नृपति. सुजीयात् ॥५५॥
तत्पट्ट-पौरुष-महोदय-पद्मसिंहो विद्वे षपद्मनिकरोदयपद्मसिंह ।
तत्सूनुरद्भु त महोदयपद्मसिंहो जात. समुन्नतमतिद्यु तिपद्मसिंह ॥५६॥
शिवानतानन्दमनोहरांग. शिवाभिरामैरनुशासितात्मा ।
शिखाभिरामद्यु तिवारिवाह शिवाभिरामो द्वितियाभिधान. ॥५७॥

अभुक्तभोगद्यु तिराजराजो गृहस्थितब्रह्मपदाधिराज. ।
विद्याविनो [दो] द्यमराजिराज. कालं स निन्ये जिनराजभक्त्या ॥५८॥

वीरोति शीलादिगुणोज्वलांगा निर्वाणवंशोदधि-पद्मजाभूत् ।
अर्हत्पदद्वन्दगताशया या सा वामला पद्महरे: पतीद्धा ॥५९॥

तस्योपदेशाग्रहतो मयेदं चरित्रमुक्तं जिनचन्द्रराज्ञ ।
शिवाभिरामेण विशुद्धसिद्धयै नवाभिमानेन कवित्वयुक्ते. ॥६०॥

यावच्च[सच्च,]न्द्र.-दिवाकरौ द्वौ यावत्सुराद्रिश्च जिनवृष(व्रत)श्च,
भ(या)वत्सतां वृत्तिरतिप्रशस्ता तावत्समानन्दतु एष ग्रन्थः ॥६१॥

क्षुत्तृड्रोगमलादिदोषविमुखाः श्रीमज्जिनेन्द्राधिपाः,
सम्यक्त्वादि-गुणाष्टकैरनुपमा. सिद्धा विशुद्धाः सदा।
पंचाचार-परायणादि-सुगुणख्यातारश्च सत्साधवो,
हिंसाभाव-विकार-वर्जित-नृपाः कुर्वन्तु वो मंगलम् ॥६२॥
श्रीवर्मा नृपराजपूजितपदोदेवस्ततः श्रीधरः,
षट्खंडाधिपतिर्महासुरपतिः श्रीपद्मनाभो नृपः।
सत्सामर्थ्यमहोदयाद्भुतसुखी सर्वार्थसिद्धीश्वर—
श्चन्द्रेशः कुरुताच्छिवं शिववधूयुक्तः सदा वश्चनः ॥६३॥
भूपा भवन्तु बलिन. प्रबलेन यौधे शांताः प्रजाश्चकलिकालकला-विनष्टाः।
विद्या-विनोद-विशदात्मगुणा स्वयं वा व्याख्यानवर्तिनि तमीशपतेः पुराणे ॥६४

पठक. पाठकश्चास्य वक्ता श्रोता च भाविकः।
विस्तारकः शिवं लेभे भुक्त्वेंद्रादि-सुखं महत् ॥६५

इत्यष्टमजिन-पुराण-संग्रहे श्रीमत्पद्महरि-शिवाभिराम (मा) वनिपसूनूक्तौ भगवन्निर्वाणगमनांतमंगलाचरण-कविसमुत्पत्ति-निरूपणाख्याभिधानः-सप्तविंशतिमः सर्ग. ॥२७॥

## १३३–शब्दार्णवचन्द्रिका-वृत्ति ( सोमदेव )

आदिभागः—

श्रीपूज्यपादममलं गुणनन्दिदेवं, सोमामरव्रतिप-पूजित-पादयुग्मम्।
सिद्धं समुन्नतपदं वृषभं जिनेन्द्रं, सच्छब्दलक्षणमहं विनमामि वीरम् ॥१॥
श्री मूलसंघजलजप्रतिबोधभानो, र्मेघेन्दुदीक्षित-भुजगसुधाकरस्य।
राद्धान्ततोयनिधिवृद्धिकरस्य वृत्तिं, रेभे हरींदु-यतये वरदीक्षिताय ॥२॥

अन्तभागः—

श्रीसोमदेवयति-निर्मितमादधाति, यानौःप्रतीत-गुणनन्दित-शब्दवार्धौ।
सेयं सताममलचेतसि विस्फुरन्ती, वृत्तिः सदा नुतपदा परिवर्तिषीष्ट ॥१॥

स्वस्ति श्रीकोल्लापुरदेशान्तर्वर्त्यार्जुरिकामहास्थान युधिष्ठिरावतार-महामण्डलेश्वर गंडरादित्यदेवनिर्मापितत्रिभुवनतिलकजिनालये

श्रीमत्परमपरमेष्ठिश्रीनेमिनाथश्रीपादपद्माराधनबलेन वादीभवज्राकुश-श्रीविशालकीर्तिपण्डितदेव वैयावृत्यत श्रीमच्छिलाहारकुलकमलमार्तण्डतेज.पुञ्जराजाधिराजपरमेश्वरपरमभट्टारकपश्चिमचक्रवर्ति श्रीवीरभोजदेव विजय-राज्ये शकवर्षैकसहस्रैकशतसप्तविंशति ११२७ तमक्रोधनसम्वत्सरे स्वस्ति-समस्तानवद्यविद्याचक्रवर्ति श्रीपूज्यपादानुरक्तचेतसा श्रीमत्सोमदेवमुनीश्वरेण विरचितेय शब्दार्णवचन्द्रिकानाम वृत्तिरिति । इतिश्रीपूज्यपादकृत जैनेन्द्रमहाव्याकरण सम्पूर्णम् ॥

( श्रीजैनमन्दिर पसारीटोला, इटावा प्रति )

## १३४. द्रव्यसंग्रहवृत्ति ( पं० प्रभाचन्द्र )

आदिभाग:—

नत्वा जिनार्कमपहस्तितसर्वदोषं, लोकत्रयाधिपतिसंस्तुतपादपद्मम् ।
ज्ञान-प्रभा-प्रकटिताखिलवस्तुसार्थं, षड्द्रव्यनिर्णयमहं प्रकटं प्रवक्ष्ये ॥१॥

अह प्रवक्ष्ये कथयिष्ये क ? षड्द्रव्यनिर्णयं षण्णा द्रव्याणा जीवादीना निर्णय निश्चयं कथं प्रवक्ष्ये प्रकट यथा भवति किं कृत्वा ? पूर्वं नत्वा नम-स्कृत्य कं ? जिनार्कं जिनादित्य कथंभूतं ? अपहस्तितसर्वदोषं अपहस्तिता निरा-कृताः सर्वदोषा.मृषादयो येन स अपहस्तितसर्वदोषस्तं आदित्येत्यादि अप-हस्तिता निराकृता सर्वदोषा रात्रि । पुन कथंभूतं ? लोकत्रयाधिपतिसंस्तुत-पादपद्म लोकत्रयस्याधिपतय स्वामिनो धरणेन्द्रनरेन्द्रसुरेन्द्रास्तैर्वंदितौ पादावेव पद्मौ यस्य स लोकत्रयाधिपतिभि' ब्रह्माविष्णुमहेश्वरैरेभि' संस्तुत पादपद्म इति परसमयवचन । पुन कथंभूतं ? ज्ञानप्रभाप्रकटिताखिलवस्तु-सार्थं ज्ञानं केवलज्ञान तदेव प्रभा तया प्रकटिता. प्रकाशिताखिलवस्तूनां निखिलपदार्थाना सार्थ समूहो येन स ज्ञानप्रभाप्रकटिताखिलवस्तुसार्थस्तं आदित्येनापि प्रभालोचनगोचरा सर्वेपदार्था. प्रकटिता इति क्रियाकारक-सम्बन्ध । अथेष्टदेवताविशेषं नमस्कृत्य महामुनिसैद्धान्तिक—श्रीनेमिचन्द्र प्रतिपादिताना षट्द्रव्याणां स्वल्पबोधप्रबोधार्थं संक्षेपार्थतया विवरणं करिष्ये ।

अन्तभाग.—

इति श्रीपरमागमिकभट्टारक-श्रीनेमिचन्द्रविरचित-षड्द्रव्यसंग्रहे श्रीप्रभाचन्द्रदेवकृतसंक्षेपटिप्पणकं समाप्तम् ॥

## १३५. पंचास्तिकाय-प्रदीप ( प्रभाचन्द्राचार्य )

आदिभागः—

प्रणम्य पादाम्बुरुहाणि भक्त्या, मनोवचःकायकृदार्हदीशां ।

प्रवक्ष्यथास्त्यांगविचारसूत्री, स्फुटीकृते टिप्पणकं विशिष्टम् ॥१॥

अथ श्रीकुमारनन्दिशिष्य. श्रीशिवकुमारमहाराजाद्यन्तेवासिनां सम्बोधनपराः विलोकितपूर्वविदेहश्रीसीमंधरस्वामितीर्थंकरपरमदेवा, पञ्चास्तिकाय-षट्द्रव्य-सप्ततत्व-नवपदार्थप्रतिपादनपराः नास्तिकत्वनिराशाय शिष्टाचार-प्रतिपालनाय पुण्यप्राप्ति-निर्विघ्न [ग्रन्थसमाप्त्यर्थं] चाभिमतदेवतानमस्कार-सूत्रं श्रीमत्कुन्दकुन्दाचार्या प्राहु —

अन्तभागः—

इति पण्डित श्रीप्रभाचन्द्रविरचिते पंचास्तिकायप्रदीपे मोक्षमार्ग-नवपदार्थ चूलिकाधिकारः समाप्त. ।

सन्मार्गतत्त्वविविधार्थमणिप्रकाश. ।
श्रीमत्प्रभेन्दुरचितोनविदन्तरर्थ्य. (?) ॥१॥
ज्योतिप्रभाप्रहतमोहमहान्धकारः
पंचास्तिकाय-भुवने ज्वलति प्रदीपः ॥२॥

## १३६. आत्मानुशासनतिलक ( प्रभाचन्द्राचार्य )

आदिभाग :—

वीरं प्रणम्य भव-वारिनिधिप्रपोतमुद्योतिताऽखिलपदार्थमनल्पपुण्यम् ।
निर्वाणमार्गमनवद्यगुणप्रबन्धमात्मानुशासनमहं प्रवरं प्रवक्ष्ये ॥१॥

बृहद्धर्मभ्रातुल्लोकसेनस्य विषयव्यामुग्धबुद्धेः संबोधनव्याजेन सर्वोपकारकं सन्मार्गमुपदर्शयितुकामो गुणभद्रदेवो निर्विघ्नतः शास्त्रपरिसमाप्त्यादिकं फलमभिलषन्नभिष्टदेवताविशेष नमस्कुर्वाणो लक्ष्मीत्याद्याह—

अन्तभाग :—

मोक्षोपायमनन्यपुण्यममलज्ञानोदयं निर्मलम् ,
भव्यार्थं परमं प्रभेन्दुकृतिना व्यक्तैः प्रसन्नैः पदैः ।
व्याख्यानं वरमात्मशासनमिदं व्यामोहविच्छेदतः,
सूक्तार्थेषु कृतादरैरहरहश्चेतस्यलं चिंत्यताम् ॥१॥

इति श्रीआत्मानुशासनतिलकं प्रभाचन्द्राचार्यविरचितं सम्पूर्णम् ।

## १३७. आराधनाकथाप्रबन्धः ( प्रभाचन्द्राचार्य )

आदिभागः—

प्रणम्य मोक्षप्रदमस्तदोषं, प्रकृष्टपुण्यप्रभवं जिनेन्द्रम् ।
वक्ष्येऽत्रभव्यप्रतिबोधनार्थमाराधनासत्सुकथाप्रबन्धम् ॥१॥

अन्तभाग —

यैराराध्य चतुर्विधामनुपमामाराधनां निर्मलाम् ।
प्राप्तं सर्वसुखास्पदं निरुपमं स्वर्गापवर्गप्रदा ।
तेषां धर्मकथा-प्रपञ्चरचना स्वाराधना संस्थिता ।
स्थेयात् कर्मविशुद्धिहेतुरमला चन्द्रार्कतारावधि ॥१॥

सुकोमलैः सर्वसुखावबोधैः पदैः प्रभाचन्द्रकृतः प्रबन्धः ।
कल्याणकालेऽथ जिनेश्वराणां, सुरेन्द्रदन्तीव विराजतेऽसौ ॥२॥

श्रीजयसिंहदेवराज्ये श्रीमद्धारानिवासिना परापरपञ्चपरमेष्ठिप्रणामोपार्जिताऽमलपुण्यनिराकृतनिखिलमलकलंकेनश्रीमत्प्रभाचंद्रपण्डितेन आराधनासत्कथाप्रबन्धः कृतः ।

## १३८. प्रवचनसरोजभास्कर ( प्रभाचन्द्राचार्य )

आदिभागः—

वीरं प्रवचनसारं निखिलार्थं निर्मलजनानन्दम् ।
वक्ष्ये सुखावबोधं निर्वाणपदं प्रणम्याप्तम् ॥१॥

श्रीकुन्दकुन्दाचार्यैः सकललोकोपकारकं मोक्षमार्गमध्ययनरुचिविनेया-

शयवशेनोपदर्शयितुकामो निर्विघ्नतः शास्त्रपरिसमाप्त्यादिकं फलमभिलषन्निष्ट-देवताविशेषं शास्त्रस्यादौ नमस्कुर्वन्नाह—

अन्तभाग —

इति श्रीप्रभाचन्द्रदेवविरचिते प्रवचनसारसरोजभास्करे शुभोपयोगाधिकार. समाप्तः ॥

## १३६. त्रैलोक्यदीपक ( वामदेव )

आदिभागः—

वन्दे देवेन्द्रवृन्दार्च्यं नाभेयं जिनभास्करं ।
येन ज्ञानांशुभिर्नित्यं लोकालोकौ प्रकाशितौ ॥१॥
संस्तवीमि क्रमद्वन्द्वं शेषानां तु जिनेशिनाम् ।
यद् ज्ञानाम्भोधिमध्यस्थं त्रैलोक्यं पद्मसंन्निभम् ॥२॥
विदधातु मम प्रज्ञां जैनशास्त्रावबोधिनीम् ।
श्रीमज्जिनमुखाम्भोज-निर्गता श्रुतदेवता ॥३॥
सिद्धान्तवारिधेश्चन्द्रं नेमिचन्द्रं नमाम्यहं ।
यस्य प्रसादतो विश्वं हस्तस्थामलकोपमम् ॥४॥
विभाति विशदाकीर्तिर्यस्य त्रैलोक्यवर्तिनी ।
नमस्तस्मै मुनीन्द्राय श्रीमत्त्रैलोक्यकीर्तये ॥५॥
आकरः सर्वविद्यानां धर्म्ममार्ग-दिवाकरः ।
धर्म्माकर इति ख्यातः स मुनिः श्रूयते मया ॥६॥
वीर-दृष्ट्यादिसेनस्य मिथ्यात्वाद्यरि संहृ (हृ ?) तौ ।
अतोऽसौ वीरसेनाख्यो जीयादागम-पारग. ॥७॥
पुरपाटवंश-भूषण-जोमन तनयस्य नेमिसेनस्य ।
अभ्यर्थनयाऽऽरब्धो ग्रंथोऽयं भव्यबोधाय ॥८॥
अथ पञ्चगुरून्नत्वा वक्ष्ये संस्कृतभाषया ।
त्रैलोक्यसारमालोक्य ग्रन्थं त्रैलोक्यदीपकम् ॥९॥

× × × ×

इत्तीन्द्रवामदेवविरचिते पुरवाटवंशविशेषकश्रीनेमिदेवस्य यश.प्रकाशके त्रैलोक्यदीपिके अधोलोकव्यावर्णनो नाम प्रथमोधिकार ॥१॥

अन्तभाग'—

जयति जित-मकरकेतु केतुर्दुष्कर्मराशिदलनाय ।
श्रीमत्त्रिभुवनकीर्ति कीर्तिलताक्रांतभुवनान्त. ॥६१॥
किं चन्द्र, किमु भास्कर. किमथवा मेरु. किमंभोनिधि. ।
किं धात्री सुर धर्म्म किं किमथवा कल्पद्रुमः विश्रुत. ।
एकैकेन गुणेन विश्रुतपृथुप्रस्थायिनस्ते स्वय ।
नैते शेषगुणाकरास्त्रिभुवने त्रैलोक्यकीर्तिः स्वयं ॥६२॥
अस्त्यत्र वंशः पुरवाडसंज्ञः समस्तपृथ्वीपतिमाननीय ।
त्यक्त्वा स्वकीयां सुरलोकलक्ष्मीं देवा अपीच्छन्ति हि यत्र जन्म ।६३
तत्र प्रसिद्धोऽजनि कामदेव पत्नी च तस्याजनि नामदेवी ।
पुत्रौ तयोर्जोमनलक्ष्मणाख्यौ बभूवतु राघवलक्ष्मणाविव ॥६४॥

रत्नं रत्नखने शशी जलनिधे रात्मोद्भव श्रीपते—
स्तद्वज्जोमनतो बभूव तनुज श्री नेमिदेवाह्वय ।
यो बाल्येऽपि महानुभावचरित सज्जैनमार्गेरत.,
शांतः श्रीगुणभूषणक्रमनुत. सम्यक्त्वचूलांकित. ॥६५॥
यस्त्यागेन जिगाय कर्णनृपतिं न्यायेन वाचस्पतिं,
नैर्मल्येन निशापतिं नगपतिं सत्स्थैर्यभावेन च ।
गाम्भीर्येण सरित्पतिं मलतर्ति सद्धर्मसद्भावनात्,
स श्रीसद् गुणभूषणोन्नतिनतो नेमिश्चिरं नन्दतु ॥६६॥
तत्सत्कार पुरस्कृतेन सततं तज्जैनतादर्शनात्,
सन्तुष्टेन तदार्यवादिसुगुणै हृष्टेन पुष्टेन च ।
तस्य प्रार्थनया सुसंस्कृतवचो बन्धेन संनिर्मितो,
ग्रन्थोऽयं त्रिजगत्स्वरूपकथन. सत्पुण्यनिर्मायिण. ॥६७॥

वंशे नैगमसंज्ञके जनसुधी जैने प्रतिष्ठा विधा—
वाचार्यो जिनभक्तितत्परमना यो वामदेवाह्वयः ।
तेनालोक्य समस्तमागमविधिं त्रैलोक्यदीपाभिधौ,
ग्रंथः साधुकृतो विशोध्य सुधियस्तन्वन्तु पृथ्वीतले ॥६८॥

वक्तृश्रोत्रनुमतॄणां विशदं जैनशासनम् ।
भव्यानामर्हतां भूयात् प्रशस्तं सर्वमंगलम् ॥६६॥

यावन्मेरु सुधासिन्धु र्यावच्चन्द्रार्कमण्डलम् ।
तावन्नित्यमहोद्योतैर्वर्धतां जैनशासनम् ॥७०॥

इतीन्द्र श्रीवामदेवविरचिते पुरवाडवंशविशेषकश्रीनेमिदेवस्य यश. प्रकाशके त्रैलोक्यदीपके ऊर्ध्वलोक व्यावर्णनोनाम तृतीयोधिकार. समाप्त. ॥

## १४०. आदिपुराणटीका (ललितकीर्ति)

आदिभागः—

जिनाधीशं नत्वा तदनु जिनवाणीं च सुगुरुं,
करोमीत्थं टीकामहमिह पुराणस्य महतः ।
द्वितीयार्द्धस्योच्चै. शरमितसुपर्व्वप्रमितिकाम्,
यथाशक्ति स्तोकांतनुमतिविशदां भक्तिवशतः ॥१॥

अन्तभागः—

शरदि शरभुजंगाहीलिका (१८८५) सत्समायां,
जगति विदितमासे भाद्रके कृष्णपक्षे ।
अकृत ललितकीर्तिदेवराट् (स) दशम्यां,
पुरुजिनवरराजः सत्पुराणस्य टीकाम् ॥१॥

## १४१. वाग्भट्टालंकारावचूरि=कविचंद्रिका (वादिराज)

आदिभागः—

अनंतानंतसंसारपारगं पार्श्वमीश्वरं ।
प्रमाण-नय-भंगाब्धिं भुक्तिभूयोप्सितं स्तुवे ॥१॥

वाग्भट्टकवीन्द्रं रचितालकारस्यावचूरि[रि]यममला ।
जिन-वचन-गुरु-कृपातो विरच्यते वादिराजेन ॥२॥
धनंजयाऽऽशाधरवाग्भटाना धत्ते पदं संप्रति वादिराजः
खांडिल्यवंशोद्भवपोमसूनु जिनोक्तपीयूषसुतृप्तचित्त. ॥३॥

अन्तभागः—

सवत्सरेनिधिदृगश्वशशाकयुक्ते (१७२६) ।
दीपोत्सवाख्यदिवसे सगुरौ सचित्रे ।
लग्नेऽलिनामनि शुभे च गिर.प्रसादात ,
सद्वादिराजरचिता कविचन्द्रिकेयं ॥१॥

श्रीराजसिंह नृपतिर्जयसिंह एव श्री तक्षकाख्यनगरी अणहिल्लतुल्या ।
श्रीवादिराज विबुधोऽपरवाग्भटोयं, श्रीसूत्रवृत्तिरिह नंदतु चार्कचन्द्र ॥२॥

श्रीमद्भीमनृपात्मजस्य बलिन. श्रीराजसिंहस्य मे,
सेवायामवकाशमाप्य विहिता टीका शिशूना हितं ।
हीनाधिक्य वचोयदत्र लिखितं तद्वै बुधैः क्षम्यताम्
गार्हस्थ्यावनिनाथ सेवनधिया क. स्वस्थतामाप्नुयात् ॥३॥

इति श्रीवाग्भट्टालंकारटीकायां पोमराजश्रेष्ठिसुतवादिराजविरचितायां कविचन्द्रिकायां पंचमः परिच्छेद. समाप्तः ॥

## १४२. रामचरित्र (ब्रह्म जिनदास)

आदिभाग.—

सुरेन्द्रमुकुटाश्लिष्टपादपद्मांशुकेशरम् ।
प्रणमामि महावीरं लोकत्रितयमंगलम् ॥१॥
सिद्धं सम्पूर्णभव्यार्थसिद्धे कारणमुत्तमम् ।
प्रशस्तदर्शनज्ञान-चारित्र प्रतिपादनम् ॥२॥
मुनिसुव्रततीर्थेशं सुव्रतं वरचेष्टितम् ।
प्रणमामि सदा भक्त्या भव्यमगलदायकम् ॥३॥

अन्तभागः—

श्रीमद्रामचरित्रमुत्तममिदं नानाकथापूरितं,
पापध्वान्तविनाशनैकतरणिं कारुण्यवल्लीवनं।
भव्यश्रेणिमनःप्रमोदसदनं भक्त्यानघं कीर्तितं,
नानासत्पुरुषालिवेष्टनयुतं पुण्यं शुभं पावनम् ॥१८०

श्रीवर्द्धमानेन जिनेश्वरेण त्रैलोक्यवंदेन यदुक्तमादौ।
ततः-परं गौतमसंज्ञकेन गणेश्वरेण प्रथितं जनानाम् ॥१८१
ततः क्रमाच्छ्री रविषेण नाम्नाऽऽचार्येण जैनागमकोविदेन।
सत्काव्यकेलीसदनेन पृथ्व्यां नीतं प्रसिद्धिं चरितं रघोश्च ॥१८२
श्री कुन्दकुन्दान्वयभूषणोऽथ बभूव विद्वान् किल पद्मनन्दी।
मुनीश्वरो वादिगजेन्द्रसिंहः प्रतापवान् भूवलये प्रसिद्धः ॥१८३
तत्पट्टपंकेजविकासभास्वान् बभूव निर्ग्रन्थवरः प्रतापी।
महाकवित्वादिकलाप्रवीणस्तपोनिधिः श्रीसकलादिकीर्तिः ॥१८४
पट्टे तदीये गुणवान् मनीषी क्षमानिधानं भुवनादिकीर्तिः।
जीयाच्चिरं भव्यसमूहवन्द्यो नानायतीव्रात निषेवणीयः ॥१८५
जगतिभुवनकीर्तिर्भूतलख्यातकीर्तिःश्रुतजलनिधिवेत्ताऽनंगमानप्रभेत्ता।
विमलगुणनिवासःछिन्नसंसारपाशःस जयतियतिराजःसाधुराजीसमाजः॥१८६
स ब्रह्मचारी गुरुपूर्वकोऽस्य भ्राता गुणज्ञोऽस्ति विशुद्धचित्तः।
जिनस्य दासो जिनदासनामा कामारिजेता विदितो धरित्र्यां ॥१८७
तेन प्रशस्तं चरितं पवित्रं रामस्य नीत्वा रविषेण सूरेः।
समुद्धृतं स्वान्यसुखप्रबोधहेतोश्चिरं नन्दतु भूमिपीठे ॥१८८
श्रीमज्जिनेश्वर-पदांबुजचंचरीकस्तच्छात्र सदगुरुषु भक्तिविधानदक्षः।
सार्थाभिधोऽसौ जिनदास नामा दयानिवासो भुवि राजते च ॥१८९
न ख्याति-पूजाद्यभिमानलोभाद् ग्रन्थः कृतोऽयं प्रतिबोधहेतोः।
निजान्ययोः किन्तु हिताय चापि परोपकाराय जिनागमोऽक्तः ॥१९०
जिनप्रसादादिदमेव याचे दुःखक्षयं शाश्वतसौख्यहेतोः।
कर्मक्षयं बोधचरित्रलाभं शुभांगतिं चेह न चान्यदेव ॥१९१

यत्किंचिदत्रस्वरसन्धिजात पदादिकं [वा] चलितं प्रमादात् ।
क्षमस्व तन्नारति । तुच्छबुद्धेर्ममाशु नो मुह्यति क. श्रुताब्धौ ॥१६२
तथा च धीमद्भिरिदं विशोध्यं मुनीश्वरैर्निर्मलचित्तयुक्तै. ।
कृत्वानुकपा मयि जैनशास्त्र (स्त्रे) विशारदै. सर्वकषायमुक्तै, ॥१६३
यावन्महीमेरुनग पृथिव्या शशी च सूर्य. परमाणवश्च ।
श्रीमज्जिनेन्द्रस्य गिरश्च तावन्नन्दत्विदं रामचरित्रमार्यम् ॥१६४

रक्षा सघस्य कुर्वन्तु जिनशासनदेवता' ।
पालयंतोऽखिल लोकं भव्यसज्जनवत्सल. ॥१६५

इति श्रीरामचरित्रे भट्टारक-सकलकीर्तिशिष्यब्रह्मजिनदासविरचिते बलदेव निर्वाणकथनो नाम त्र्यशीतितम. सर्ग ॥८३

## १४३. ज्येष्टजिनव्रतकथा (ब्रह्मश्रुतसागर)

आदिभाग —

ज्येष्टं जिनं प्रणम्यादावकलंककलध्वनिं ।
श्रीविद्यादिनदिनं ज्येष्टजिनव्रतमथोच्यते ॥१॥

अन्तभाग:—

आसीदसीममहिमा मुनि पद्मनन्दी देवेन्द्रकीर्ति गुरुरस्य पदेशदेक. (?) ।
तत्पट्टविष्णुपदपूर्णशशाकमूर्तिर्विद्यादिनंदिगुरुरत्रपवित्रचित्त ॥७६॥

गुणरत्नभृतो वचोऽमृताढ्यः स्याद्वादोर्मिसहस्रशोभितात्मा ।
श्रुतसागर इत्यमुष्यशिष्य' स्वाख्यान रचयाचकार सूरि ॥७७॥

अग्रोत्कान्वयशिरोमुकुटायमान. सघाधिनाथ विमलूरिति पुण्यमूर्तिं. ।
भार्यास्य धर्ममहती वृहतीति नाम्ना सासूत सूनुमनवद्य महेन्द्रदत्तं ॥७८॥
वैराग्यभावितमना. जिनूल्ह (?) दिष्ट श्रीमूलसघगुणरत्नविभूषणोऽभूत् ।
देशव्रतिष्वतितरा व्रतशोभितात्मा संसारसौख्यविमुख सुतपोनिधिर्वा ॥७९॥
पुत्रोस्य लक्ष्मणइति प्रणतीगुरूणा कुर्वंश्चकास्ति विदुषाधुरि वर्णनीय ।
अभ्यर्थकारितमिदं श्रुतसागराख्यमाख्यानक चिरतर शुभदं समस्तु ॥८०॥

इतिप्रचंडपंडिताग्रणीसूरिश्रीश्रुतसागरविरचितं ज्येष्ठजिनवरव्रतोपाख्यानं समाप्तम् ॥१॥

## १४४. रविव्रतकथा (ब्रह्मश्रुतसागर)

आदिभाग:—

प्रणम्य शिरसार्हन्तं सिद्धांस्त्रैलोक्यमंगलान् ।
मुनींस्तद्धर्मवाग्देव्यौ रविव्रतमहं ब्रुवे ॥१॥

अन्तभाग:—

सरस्वतीगच्छ-सुरद्रुमावलीवलीढभूसेचनधीघनाघनः ।
चिरं च देवेन्द्रयशा मुनिर्मम प्रकामकामाग्निशमं प्रयच्छतु ॥६१॥
भट्टारकघटामध्ये यत्प्रतापो विराजते ।
तारास्विव रवेः श्रीदो विद्यानंदीश्वरोऽस्तु मे ॥६२॥
प्रमाण-लक्षणच्छंदोऽलंकारमणिमंडितः ।
पंडितस्तस्य शिष्योऽयं श्रुतरत्नाकराभिधः ॥६३॥
गुरोरनुज्ञामधिगम्य धीधनश्चकार संसारसमुद्रतारकः (कम्) ।
स पार्श्वनाथव्रतसत्कथानकं सतां नितांतं श्रुतसागरः श्रिये ॥६४॥

इति रविव्रतकथा समाप्ता ।

## १४५. सप्तपरमस्थानव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

विद्यानंद्यकलंकार्यं पूज्यपादं जिनेश्वरम् ।
नत्वा ब्रवीम्यहं सप्तपरमस्थानसद्व्रतम् ॥१॥

अन्तभाग:—

व्रतरतिरकलंकः पूज्यपादो मुनीनां, गुणनिधिरबुधानां बोधिकृत्पद्मनन्दी ।
जयति महितकांतिः क्षेमकृद्दिव्यमूर्तिर्मदनमदविदारी देवदेवेंद्रकीर्तिः ॥६२॥
सद्भट्टारक" (?) वर्णनीयश्चेतो यतीनामभिवंदनीयः ।
विद्यादिनंदी गणभृत्तदीयः सम्यग्जयत्येष गुरुर्मदीयः ॥६३॥
मया तदादेशवशेन धीमतां प्रकाशितेयं महता बृहत्कथा ।

पिबन्तु तां कर्णसुधां बुधोत्तमा महानुभावाः श्रुतसागराश्रिताः ॥६४॥
विरुद्धमागमात्किंचिद्वचो यदि च भाषितम् ।
तन्मे सरस्वती चंतु मनते ( मानिते ) मातरर्हसि ॥६५॥

इति सप्तपरमस्थानकथा सम्पूर्णा ।

## १४६. मुकुटसप्तमीकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

श्रीशारदास्पदीभूत-पादद्वितयपंकजम् ।
नत्वाऽर्हन्तं प्रवक्ष्यामि व्रतं मुकुटसप्तमी ॥१॥

अन्तभाग:—

श्रीमल्लिभूषणगुरो. प्रकटोपदेशाच्चक्रे कथानकमिदं श्रुतसागरेण-।
देशव्रतेन कृतिना सुकृतैकहेतु. शं वस्तनोरिवह परत्र भवे च नित्यम् ॥६१॥

इति मुकुटसप्तमीकथा समाप्ता ।

## १४७. अक्षयनिधिव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

पूज्यपादाऽकलंकार्यविद्यानंदींद्रवंदितम् ।
प्रणम्य तीर्थकृद्देवं वक्ष्येऽक्षयनिधिव्रतम् ॥१॥

अन्तभाग:—

गच्छे श्रीमन्मूलसंघतिलके सारस्वते विश्रुते,
विद्वन्मान्यतम-प्रसह्य-सुगणे स्वर्गापवर्गप्रदे ।
विद्यानंदिगुरुर्बभूव भविकानंदी सतां सम्मत-
स्तत्पट्टे मुनिमल्लिभूषणगुरुर्भट्टारको नंदतु ॥८७॥
तर्कव्याकरणप्रवीणमतिना तस्योपदेशाहित-
स्वांतेन श्रुतसागरेण यतिना तेनाऽमुना निर्मितम् ।
श्रेयोधामनिकाममक्षयनिधिं स्वेष्टव्रतं धीमतां,
कल्याणप्रदमस्तु शास्त्रमितिनस्तत्तद्विदां संमुदे ॥८८॥

इत्यक्षयनिधिविधानकथानकं समाप्तम् ।

## १४८. षोडशकारणकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

अथप्रणम्यतीर्थेशं तीर्थेशपदलब्धये ।
श्रीविद्यानंदिनं साधुं ब्रुवे षोडशकारणम् ॥१॥

अन्तभाग:—

श्रीमूलसंघे विबुधप्रपूज्ये श्रीकुंदकुंदान्वय उत्तमेऽस्मिन् ।
विद्यादिनंदी भगवान् बभूव स्ववृत्तसारश्रुतपारमाप्तः ॥६७॥
तत्पादभक्तः श्रुतसागराख्यो देशव्रती संयमिनां वरेण्यः ।
कल्याणकीर्त्तेर्मुहुराग्रहेण कथामिमां चारु चकार सिद्ध्यै ॥६८॥

इति षोडशकारणोपाख्यानं समाप्तम् ।

## १४९. मेघमालाव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

समंताद्भद्रमर्हंतं नत्वा विद्यादिनंदिनम् ।
मेघमालाव्रतं मेघमालाशांत्यर्थमुच्यते ॥१॥

अन्तभाग:—

सत्यं वाचि, हृदि स्मरत्ययमतिर्मोक्षाभिलाषोऽन्तरे,
श्रोत्रं साधुजनोक्तिषु प्रतिदिनं सर्वोपकारः करे ।
यस्यानंदनिधेर्बभूव स विभुर्विद्यादिनन्दी मुनिः,
संसेव्यः श्रुतसागरेण विदुषा भूयात्सतां संपदे ॥५१॥

इति मेघमालाव्रतोपाख्यानं समाप्तम् ।

## १५०. चन्दनषष्ठीकथा ( ब्रह्मश्रुतसागर )

आदिभाग:—

प्रभाचन्द्रं पूज्यपादं श्रीविद्यानन्दिनं जिनम् ।
समन्तभद्रं संस्मृत्य वक्ष्ये चन्दनषष्ठिकाम् ॥१॥

अन्तभागः—

स्वस्ति श्रीमूलसंघेऽभवदमरनुत. पद्मनंदी मुनीन्द्र

शिष्यो देवेन्द्रकीर्तिर्लसदमलतया भूरिभट्टारकेज्यः।

श्रीविद्यानंदिदेवस्तदनुमनुजराजार्च्यतत्पद्मयुग्म-

स्तच्छिष्येणारचीदं श्रुतजलनिधिना शास्त्रमानन्दहेतु ॥६६॥

स्वल्पमपि शास्त्रमेतच्छब्दार्थविचित्रभावरचिततया।

उद्वेलद्रवमहाब्धेर्मलमंतर्ज्जातमपनयति ॥६७॥

इति श्रीब्रह्मश्रुतसागरविरचिता चन्दनषष्ठीकथा समाप्ता।

## १५१. लब्धिविधानकथा (ब्रह्मश्रुतसागर)

आदिभाग —

श्रीविद्यानंदिन पूज्यपादं नत्वा जिनेश्वरम्।

कथां लब्धिविधानस्य वच्म्यहं सिद्धिलब्धये ॥१॥

अन्तभागः—

जयति गुणसमुद्रो वीरनाथो जिनेन्द्रस्तदनु जयति धीमान् गौतम सूरिवर्य.।

जयति जगति विद्यानंदिदेवो मुनीन्द्रः श्रुतपदसमुपेत सागरस्तस्य शिष्य.॥५५

तेनेदं चरित विचित्ररचनं चेतश्चमत्कारकं,

सर्वव्याधिविनाशिनं गुणकरं श्रीगौतमस्योत्तमम्।

चक्रे शक्रपुरस्सरैर्म्मान्यं (रतिमहामान्यैः) सदा सम्पदां

वेश्मश्री श्रुतसागराश्रितवता देयात्सतां मंगलम् ॥५६॥

इतिब्रह्मश्रीश्रुतसागरविरचितं लब्धिविधानोपाख्यानं समाप्तम्।

## १५२. पुरंदरविधानकथा (ब्रह्मश्रुतसागर)

आदिभागः—

उमास्वामिनमर्हन्तं शिवकोटिं महामुनिम्।

विद्यानंदिगुरुं नत्वा पुरंदरविधिं ब्रुवे ॥१॥

अन्तभागः—

आनन्दादकलंकदेवचरणाम्भोजालिना दीक्षितो
विद्यानंदिमहात्मनां श्रुततपोमूर्तिः परार्थे रतः।
साधूनां श्रुतसागरः प्रियतमः कल्याणकीर्त्याग्रहा-
च्चक्रे चारुपुरंदरव्रतविधिं सिद्ध्यंगना-लालसः ॥६३॥

इति पुरंदरविधानोपाख्यानं समाप्तम्।

## १५३. दशलाक्षिणीव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभागः—

अर्हतं भारतीं विद्यानंदिसद्गुरुपंकजम्।
प्रणम्य विनयाद्वक्ष्ये दशलाक्षणिकं व्रतम् ॥१॥

अन्तभागः—

जातः श्रीमति मूलसंघतिलके श्रीकुंदकुंदान्वये,
विद्यानंदिगुरुर्गरिष्ठमहिमा भव्यात्मसंबुद्धये।
तच्छिष्यश्रुतसागरेण रचितं कल्याणकीर्त्याग्रहे
शं देयाद्दशलक्षणव्रतमिदं भूयाच्च सत्संपदे ॥६६॥

इति श्रीदशलाक्षणिकव्रतकथा समाप्ता।

## १५४. पुष्पांजलिव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभागः—

कवीन्द्रमकलंकाख्यं विद्यानन्दं जिनेश्वरम्!
पूज्यपादं प्रणम्यादौ वक्ष्ये पुष्पांजलिव्रतम् ॥१॥

अन्तभागः—

स्वस्ति श्रीमति मूलसंघतिलके गच्छे गिमूच्छं (मुमुक्षु) च्छिवे,
भारत्याः परमार्थपंडितनुतो विद्यादिनन्दी गुरुः।
तत्पादाम्बुजयुग्ममत्तमधुलिट् चक्रे नवक्राशयः,
सद्बोधः श्रुतसागरः शुभमुपाख्यानं स्तुतस्तार्किकैः ॥१०१॥

इति पुष्पांजलिव्रतकथा समाप्ता।

## १५५. आकाशपंचमीकथा (ब्रह्मश्रुतसागर)

आदिभाग.—

सुतं नाभेर्यशस्वत्या. पतिं भरतसद्गुरुम् ।
आकाशपंचमीं वक्ष्ये नत्वा लोकत्रयप्रभुम् ॥१॥

अन्तभाग —

वाचां लीलावतीना निधिरमलतपा. संयमोदन्वदिन्दु.,
श्रीविद्यानन्दिसूरिर्जयतु जगति नाकौकसां पूज्यपाद. ।
रंगद्गङ्गातरंगैस्त्रिभुवनपथगास्पर्द्धिनी यस्य कीर्ति—
र्भूयाद्भूय. शिवाय प्रगुणगुणमणीना सतां रोहणाद्रि. ॥१०३॥
तस्य श्रीश्रुतसागरेण विदुषा वर्येण सौंदर्यव—
च्छिष्येणारचि सत्कथानकमिदं पीयूषवर्षोपमम्,
सन्तश्चातकवत्पिबंतु जगतामेनोनिदाघ. क्षयं
भव्यानां वितरतु पंचगुरवश्चेतोमुदं संपदम् ॥१०४॥

इत्याकाशपञ्चमीव्रतकथा समाप्ता ।

## १५६. मुक्तावलीव्रतकथा (ब्रह्मश्रुतसागर)

आदिभाग .—

प्रभाचन्द्राऽकलंकेष्टविद्यानन्दीडितक्रमाम् ।
जीवन्मुक्तावलीं नत्वा वक्ष्ये मुक्तावलीव्रतम् ॥१॥

अन्तभाग :—

ग्रन्थं ग्रन्थिचयं विघट्य घटनामुद्भाव्य निर्दूषणम्,
य सम्बोधयते स्म भव्यनिवहं श्रीमूलसंघेऽनघे ।
श्रीदेवेन्द्रयशास्तदुन्नतपदे निस्तारको वीरव—
द्विद्यानंदिमुनीश्वरो विजयते चारित्ररत्नाकरः ॥७७॥
तत्पादाम्बुजर्चितनामृतभृतः सर्वज्ञचन्द्रोदये,
रङ्गद्गङ्गतरङ्गशोधितमहीरङ्गो विशुद्धाशयः ।

श्रौदार्यादिगुणौघरत्नवसतिर्विद्याविनोदस्थिति—
स्तच्छिष्यः श्रुतसागरो विजयतां मुक्तावलीकृद्यति. ॥७८॥
जातो हूँवडवंशमण्डनमणि. श्रीगोपियाख्यः कृती,
कांता शीरिति तस्य सद्गुरुमुखोद्भूतेश्च कल्याणकृत् ।
पुत्रोऽस्यां मतिसागरो मुनिरभूद्भव्यौघसम्बोधकः,
सोऽयं कारयति स्म निर्मलतपाः शास्त्रं चिरं नन्दतु ॥७८॥

इति श्रीमुक्तावलीविधानकथानकं समाप्तम्

## १५७. निर्दुःखसप्तमीकथा (ब्रह्मश्रुतसागर)

आदिभाग :—

विद्यानंदं प्रभाचंद्र पूज्यपादं जिनेश्वरम् ।
नत्वाऽकलंक गावच्मि कथां निर्दुःखसप्तमीम ॥

अन्तभाग :—

सकलभुवनभास्वद्रूपणं भव्यसेव्यः
समजनि कृतिविद्यानंदिनामा मुनीन्द्रः ।
श्रुतसमुपपदाद्यः सागरस्तस्य सिद्धयै,
शुचिविधिमिमसेष द्योतयामास शिष्य. ॥४३॥

इति निर्दुःखसप्तमीविधानोपाख्यानं समाप्तम् ।

## १५८. सुगन्धदशमीकथा (ब्रह्मश्रुतसागर)

आदिभाग :—

पादाम्भोजानहं नत्वा श्रीमतां परमेष्ठिनाम् ।
शृण्वन्तु साधवो वक्ष्ये सुगन्धदशमीकथाम् ॥१॥

अन्तभाग :—

कृतिरितियतिविद्यानंदिदेवोपदेशाज्जिनविधुवरभक्तेर्वर्णिनस्तु श्रुताब्धेः ।
विबुधहृदयमुक्तामालिकेव प्रणीता सुकृतधनसमर्घ्या गृह्णतां तां विनीता. ॥६१॥

इति श्रीवर्णिना श्रुतसागरेण विरचिता सुगंधदशमीकथा समाप्ता ।

## १५६. श्रवणद्वादशीकथा (ब्रह्मश्रुतसागर)

आदिभाग —

पूज्यपाद-प्रभाचन्द्राऽकलंकमुनिमानितम्।
नत्वाऽर्हन्तं प्रवक्ष्यामि श्रवणद्वादशीविधिम् ॥१॥

अन्तभाग —

विद्यानन्दिमुनींद्रचन्द्रचरणांभोजातपुष्पंधय
शब्दज्ञः श्रुतसागरो यतिवरोऽसौ चारु चक्रे कथाम्।
श्रुत्वा पापकलंकपंकविलसन्मन्दाकिनीमुत्तमां
संतः सारसुखाय धर्मतृषिताः कुर्वन्तु पुण्यात्मनाम् ॥४०॥
इतिश्रवणद्वादशी-उपाख्यानं समाप्तम्।

## १६०. रत्नत्रयकथा (ब्रह्मश्रुतसागर)

आदिभाग —

विद्यानन्दप्रदं पूज्यपादं नत्वा जिनेश्वरम्
कथां रत्नत्रयस्याहं वक्ष्ये श्रेयोनिधे. सताम् ॥१॥

सर्वज्ञसारगुणरत्नविभूषणोऽसौ विद्यादिनंदिगुरुरुच्यतरप्रसिद्ध. ।
शिष्येण तस्य विदुषा श्रुतसागरेण रत्नत्रयस्य सुकथा कथितात्मसिद्ध्यै ॥८३॥
इति श्रीरत्नत्रयविधानकथानकं समाप्तम्।

## १६१. अनन्तव्रतकथा ( ब्रह्मश्रुतसागर )

आदिभाग —

प्रणम्य परमात्मानमनंतं परमेष्ठिनम्।
विद्यानंदं प्रवक्ष्येऽहमनंतव्रतसत्कथाम् ॥१॥

अन्तभाग:—

सूरिर्देवेन्द्रकीर्तिर्विबुधजननुतस्तस्य पट्टाब्धिचंद्रो
रुंद्रो विद्यादिनंदी गुरुरमलतपा भूरिभव्याब्जभानु ।
तत्पादांभोजभृंग. कमलदललसल्लोचनश्चंद्रवक्त्रः

कर्तामुष्यनन्तव्रतस्य श्रुतसमुपपदः सागरः शं क्रियाद्वः ॥४७॥

इत्यनंतव्रतकथा ब्रह्मश्रीश्रुतसागरविरचिता सम्पूर्णा ।

## १६२. अशोकरोहिणीकथा ( ब्रह्मश्रुतसागर )

आदिभागः—

नत्वा पंचगुरून् विद्यानंदस्वात्मसपदम् ।
अशोकरोहिणीवृत्तं सिद्धये कथयाम्यहम् ॥१॥

अन्तभागः—

गच्छे श्रीमति मूलसंघतिलके सारस्वते निर्मले
तत्त्वज्ञाननिधिर्बभूव सुकृती विद्यादिनन्दी गुरुः ।
तच्छिष्यश्रुतसागरेण रचिता संक्षेपतः सत्कथा
रोहिण्याः श्रवणामृतं भवतु वस्तापच्छिदे संततम् ॥६६॥

इतिश्रीश्रुतसागरविरचिता अशोकरोहिणीकथा समाप्ता ।

## १६३. तपोलक्षणपंक्तिकथा ( ब्रह्मश्रुतसागर )

आदिभागः—

विद्यानन्दं प्रभाचन्द्रमकलंकं जिनाधिपम् ।
प्रणम्य शिरसा वक्ष्ये तपोलक्षणपंक्तिकम् ॥१॥

अन्तभागः—

देवेन्द्रकीर्तिगुरुपट्टसमुद्रचंद्रो विद्यादिनंदिसुदिगम्बर उत्तमश्रीः ।
तत्पादपद्ममधुपः श्रुतसागरोऽयं ब्रह्मव्रती तप इदं प्रकटीचकार ॥४२॥

इतिब्रह्मश्रीश्रुतसागरविरचिता लक्षणपंक्तितपःकथा समाप्ता ।

## १६४. मेरुपंक्तिकथा ( ब्रह्मश्रुतसागर )

आदिभागः—

चिंतयित्वा चिरं वीरं धीरं गम्भीरशासनम् ।
विद्यानंदप्रदं मेरुपंक्तिमुद्योतयाम्यहम् ॥१॥

अन्तभागः—

सोनाख्युद्यसखी कदाग्रहविमुखी शुभ्रांशुशुंभन्मुखी
पूजादानमुनीन्द्रमानविनयस्वाध्यायसाधुद्यु ति. ।
विद्यानंद्यकलंकदेवकलिते मार्गे रतिं बिभ्रती
श्रीमान् कांकसुतात्रकीर्तितभुजा ढोसी चिरं जीवतु ॥४६॥

इतिश्रीश्रुतसागरविरचितं मेरुपंक्त्युपाख्यानं समाप्तम् ।

## १६५. विमानपंक्तिकथा ( ब्रह्मश्रुतसागर )

आदिभाग —

पूज्यपादाऽकलंऽऽकार्य-विद्यानंदिस्तुतक्रमम् ।
विमानपंक्तिमावच्मि तपो नत्वा जिनेश्वरम् ॥१॥

अन्तभाग —

सद्‌वाक्यमलंघ्यमित्यपि मनस्यारोप्य विद्वद्वरो
वर्णि-श्रीश्रुतसागरो जिनपतेर्द्धर्मानुरागादर ।
गोमत्याहतवाक्यबोधनपरश्चक्रे नवक्राशयः
सम्यग्दृष्टिचकोरचद्रवदनः शास्त्रं चिरं नदतु ॥८८॥

इति भट्टारकश्रीविद्यानंदिप्रियशिष्य सूरि(वर्णि)श्रीश्रुतसागरविरचिता विमानपक्त्युपाख्यानकथा समाप्ता ।

## १६६. पल्यविधानकथा ( ब्रह्मश्रतसागर )

आदिभाग —

श्रीविद्यानंदिपादाब्जं हृदि ध्यात्वोन्नतिप्रदम् ।
सूत्रानुसारत पल्यविधानं रचयाम्यहम् ॥१॥

अन्तभाग —

श्रीमूलसंघपरमार्हतभव्यपद्मसंबोधवाक्यकिरणं प्रगुणप्रतापः ।
देवेन्द्रकीर्तिरभवद्भुवनैकभानुर्गच्छे गिर सुरनरोरगपूजितेऽस्मिन् ॥४०॥
तत्पट्टवारिधिसमुल्लसनैकचद्र सांद्रद्यु ति परमखंडसमुद्यवृत्त ।
निर्लाञ्छनो बुधजनैरभिपूज्यपादो विद्यादिनंदिगुरुरत्र चिर विरेजे ॥४१॥

तत्पादपंकजरजोरचितोत्तमांगः श्रीमल्लिभूषणगुरुर्विदुषां वरेण्यः ।
भट्टारको भुवनभव्यसरोजसूर्यो मिथ्यातमोविघटने पटुरेष भाति ॥४२॥

सर्वज्ञशासनमहामणिमंडितेन तस्योपदेशवशिना श्रुतसागरेण ।
देशव्रतिप्रभुतरेण कथेयमुक्ता सिद्धिं ददातु गुरुभक्तिविभावितेभ्यः ॥४३॥

श्रीभानुभूपतिभुजाऽसिजलप्रवाहनिर्मग्नशत्रुकुलजाततत. प्रभावः ।
सद्वृद्धहुंबडकुले बृहतीलदुर्गे श्रीभोजराज इति मंत्रिवरो बभूव ॥४४॥

भार्यास्य सा विनयदेव्यभिधा सुधोपसोद्गारवाक् कमलकांतमुखी सखीव ।
लक्ष्म्याः प्रभोर्जिनवरस्य पदाब्जभृंगी साध्वी पतिव्रतगुणा मणिवन्महार्घ्या ॥४५

साऽसूत भूरिगुणरत्नविभूषितांगं श्रीकर्म्मसिंहमितिपुत्रमनूकरत्नम् ।
कालं च शत्रु-कुल-कालमनूनपुण्यं श्रीघोषरंघनतराघगिरींद्रवज्रम् ॥४६॥

गंगाजलप्रविमलोच्चमनोनिकेतं तुर्यं च वर्यंतरमंगजमत्र गंगम् ।
जाता पुरस्तदनु पुत्तलिका स्वसैषां वक्त्रेषु सज्जिनवरस्य सरस्वतीव ॥४७॥

सम्यक्त्वदार्ढ्यकलिता किल रेवतीव सीतेव शीलसलिलोक्षितभूरिभूमिः ।
राजीमतीव सुभगागुणरत्नराशिर्वेलासरस्वतिइवांचति पुत्तलीह ॥४८॥

यात्रां चकार गजपंथगिरौ ससंघा ह्यतत्तपोविदधती सुदृढव्रता सा ।
सच्छांतिकं गणसमर्चनमर्हदीशं नित्यार्चनं सकलसंघसदत्तदानम् ॥४९॥

तुंगीगिरौ च बलभद्रमुनेः पदाब्जभृंगी तथैव सुकृतं यतिभिश्चकार ।
श्रीमल्लिभूषणगुरुप्रवरोपदेशाच्छास्त्रं व्यधाय यदिदं कृतिनां हृदिष्टम् ॥५०॥

मातेव व्रतिनां गुणान् विदधती संश्रृण्वती चागमं
पूजादानपरा परोपकृतिकृद्दक्षैव चनन्यच्चत. (?) ।
स्त्री चैषांगवशेन मानसदृढा निर्व्यूढचारुव्रता
दीर्घायुर्बलभद्रदेवहृदया भूयात्पदं संपद. ॥२५१॥

इतिभट्टारकश्रीमल्लिभूषणगुरूपदेशात्सूरिश्रुतसागरविरचिता पल्यविधानव्रतोपाख्यानकथा समाप्ता ।

## १७०. बृहत्सिद्धचक्रपूजा (बुध वीरु)

आदिभाग —

अनन्तानन्तसौख्याढ्यं सिद्धचक्रं प्रणम्य वै ।
श्रीबृहत्सिद्धचक्रस्य विधिं वक्ष्ये विधानतः ॥१॥

अन्तभाग :—

वेदाष्टबाणशशि-संवत्सरविक्रमनृपाद्वहमाने ।
रुहितासनाम्नि नगरे बब्बर-मुगलाधिराज-सद्राज्ये ॥१॥
श्रीपार्श्वचैत्यगेहे काष्ठासंघे च माथुरान्वयके ।
पुष्करगणे बभूव भट्टारकमणिकमलकीर्त्याह्वः ॥२॥
तत्पट्टकुमुदचन्द्रो मुनिपतिशुभचन्द्रनामधेयोऽभूत् ।
तत्पट्टाब्जविकासी यतिराट् यशसेन इति कथित. ॥३॥
तच्छिष्यणीह जाता सच्छील-तरंगिणी महाव्रतिनी ।
राजश्रीरिति नाम्नी संयमनिलया विराजते जगति ॥४॥
तद्भ्राता मुनिदाने श्रेयोनृप इति विभासते सुतराम् ।
श्रीनयणसीह नाम्ना पद्मावतिपुरवाल इति भाति ॥५॥
तत्पुत्र सुपवित्रो विद्याविनयाम्बुधि सुधी धीर. ।
जिनदासनामधेयो विद्वज्जनमान्यतां प्राप्त. ॥६॥
अग्रोतवंशजातस्तोतूसाधोस्तूनद्भवो मतिमान् ।
मुनिहेमचन्द्रशिष्यो वीरु नामा बुधश्चास्ते ॥७॥
बुधजिनदास-निदेशात् वीरुबुधश्चित्रबुद्धि-विभवेन ।
श्रीसिद्धचक्रयंत्रं, दृष्ट्वा पाठं व्यरीरचत्सुगमम् ॥८॥
य पठति लिखति पूजां करोति कारयति सिद्धचक्रस्य ।
सुर मनुज-सुखं भुक्त्वा स याति मोक्षं भवैः कतिभि. ॥९॥
यावत्सुमेरु-कुलगिरि-क्षीरोदधि-धरणि-सुरनदीपूरं ।
तावत्सुसिद्धपूजा पाठावेतौ प्रवर्तयताम् ॥१०॥

शुद्धज्ञानमया जरादिरहिताः सिद्धा भवन्तु श्रियै
भव्यानां सुखकारिणो जिनवराः सन्तुक्षितौ भूभुजाम् ॥
आचार्या वितरन्तु मंगलविधिं सर्वप्रदानां सदा
सम्यक्साधुपदाधिरूढपतयः प्रीणंतु सङ्घं चिरम् ॥११॥

इतिबुधवीरुविरचित-पद्मावतिपुरवालपण्डितश्रीजिनदासनामाङ्कितबृहत्सिद्धचक्रपूजा समाप्ता ।

## १७१. यशोधरचरित्र ( भ० ज्ञानकीर्ति )

आदिभाग—

श्रीमन्नाभिसुतो जीयाज्जिनो विजितदुर्नयः ।
मङ्गलार्थं नतो वस्तु ( वोऽस्तु ) सर्वदा मंगलप्रदः ॥१॥

नमामि देवं मुनिसुव्रताख्यं, मुनिव्रतैर्भूषितभव्यदेहम् ।
सुरेन्द्रराजेन्द्रकिरीटकोटि रत्नप्रभालीढपदारविन्दम् ॥२॥

श्रीवर्द्धमानं प्रणमामि नित्यं, श्रीवर्द्धमानं मुनिवृन्दवन्द्यम् ।
धर्माम्बुवर्षैः परिपुष्टनीति भव्यासुभृत्सस्यसमूहमीशम् ॥३॥

शेषान् जिनान् धर्मसुतीर्थनाथान् वंदे सदा मंगलदानदक्षान् ।
कैवल्यदीपेन विलोकितार्थान् विभून् विमुक्तेः पथसार्थवाहान् ॥४॥

सर्वज्ञवक्त्राब्जविनिर्गतां ता जैनेश्वरीं वाचमहं स्तवीमि ।
सदंगपूर्वादिस्वरूपगात्रीमज्ञानदुर्ध्वान्तरविप्रकाशाम् ॥५॥

श्रीगौतमादेर्गणपस्य पादान् स्तुवे सदाऽहं दृढभक्तिचित्तः ।
नमन्मुनिवृन्दनिवन्द्यमानानपारजन्माम्बुधिपोततुल्यान् ॥६॥

उमादिकस्वातिमशेषतत्त्वं सूत्रार्थकारं कविसृष्टिकारं ।
प्रत्येकबुद्धाख्यगणेशकीर्तिं स्वान्तां प्रकुर्वन्तमुपैमि भक्त्या ॥७॥

समंतभद्रं कविराजमेकं वादीभसिंहं वरपूज्यपादम् ।
भट्टाकलंकं जित-बौद्धवादं प्रभादिचन्द्रं सुकविं प्रवन्दे ॥८॥

## १७०. बृहत्सिद्धचक्रपूजा (बुध वीरु)

आदिभाग —

अनन्तानन्तसौख्याढ्यं सिद्धचक्रं प्रणम्य वै ।
श्रीबृहत्सिद्धचक्रस्य विधिं वक्ष्ये विधानतः ॥१॥

अन्तभाग :—

वेदाष्टबाणशशि-संवत्सरविक्रमनृपाद्वहमाने ।
रुहितासनाम्नि नगरे बब्बर-मुगलाधिराज-सद्राज्ये ॥१॥
श्रीपार्श्वचैत्यगेहे काष्ठासंघे च माथुरान्वयके ।
पुष्करगणे बभूव भट्टारकमणिकमलकीर्त्याह्वः ॥२॥
तत्पट्टकुमुदचन्द्रो मुनिपतिशुभचन्द्रनामधेयोऽभूत् ।
तत्पट्टाब्जविकासी यतिराट् यशसेन इति कथितः ॥३॥
तच्छिष्यणीह जाता सच्छील-तरंगिणी महाव्रतिनी ।
राजश्रीरिति नाम्नी संयमनिलया विराजते जगति ॥४॥
तद्भ्राता मुनिदाने श्रेयोनृप इति विभासते सुतराम् ।
श्रीनयणसीह नाम्ना पद्मावतिपुरवाल इति भाति ॥५॥
तत्पुत्र सुपवित्रो विद्याविनयाम्बुधि सुधी धीर ।
जिनदासनामधेयो विद्वज्जनमान्यतां प्राप्त ॥६॥
अग्रोतवंशजातस्तोतूसाधोस्तुनन्द्नवो मतिमान् ।
मुनिहेमचन्द्रशिष्यो वीरु नामा बुधश्चास्ते ॥७॥
बुधजिनदास-निदेशात् वीरुबुधश्चित्रबुद्धि-विभवेन ।
श्रीसिद्धचक्रयंत्रं, दृष्ट्वा पाठं व्यरीरचत्सुगमम् ॥८॥
य पठति लिखति पूजां करोति कारयति सिद्धचक्रस्य ।
सुर-मनुज-सुखं भुक्त्वा स याति मोक्षं भवैः कतिभि ॥९॥
यावत्सुमेरु-कुलगिरि-क्षीरोदधि-धरणि-सुरनदीपूरं ।
तावत्सुसिद्धपूजा पाठावेतौ प्रवर्तयताम् ॥१०॥

शुद्धज्ञानमया जरादिरहिताः सिद्धा भवन्तु श्रियै
भव्यानां सुखकारिणो जिनवराः सन्तुक्षितौ भूभुजाम् ॥
आचार्या वितरन्तु मंगलविधिं सर्वप्रदानां सदा
सम्यक्साधुपदाधिरूढपतयः प्रीणंतु सङ्घं चिरम् ॥११॥

इतिबुधवीरुविरचित-पद्मावतिपुरवालपण्डितश्रीजिनदासनामाङ्कितबृहत्सिद्धचक्रपूजा समाप्ता ।

## १७१. यशोधरचरित्र (भ० ज्ञानकीर्ति)

आदिभाग—

श्रीमन्नाभिसुतो जीयाज्जिनो विजितदुर्नयः ।
मङ्गलार्थं नतो वस्तु (वोऽस्तु) सर्वदा मंगलप्रदः ॥१॥

नमामि देवं मुनिसुव्रताख्यं, मुनिव्रतैर्भूषितभव्यदेहम् ।
सुरेन्द्रराजेन्द्रकिरीटकोटि रत्नप्रभालीढपदारविन्दम् ॥२॥

श्रीवर्द्धमानं प्रणमामि नित्यं, श्रीवर्द्धमानं मुनिवृन्दवन्द्यम् ।
धर्माम्बुवर्षैः परिपुष्टनीति भव्यासुभृत्शस्यसमूहमीशम् ॥३॥

शेषान् जिनान् धर्मसुतीर्थनाथान् वंदे सदा मंगलदानदक्षान् ।
कैवल्यदीपेन विलोकितार्थान् विभून् विमुक्तेः पथसार्थवाहान् ॥४॥

सर्वज्ञवक्त्राब्जविनिर्गतां तां जैनेश्वरीं वाचमहं स्तवीमि ।
सदंगपूर्वादिस्वरूपगात्रीमज्ञानदुर्भ्रान्तरविप्रकाशाम् ॥५॥

श्रीगौतमादेर्गणपस्य पादान् स्तुवे सदाऽहं दृढभक्तिचित्तः ।
नमन्मुनिवृन्दनिबन्ध्यमानानपारजन्माम्बुधिपोततुल्यान् ॥६॥

उमादिकस्वातिमशेषतत्त्वं सूत्रार्थकारं कविसृष्टिकारं ।
प्रत्येकबुद्धाख्यगणेशकीर्तिं स्वान्तां प्रकुर्वन्तमुपैमि भक्त्या ॥७॥

समंतभद्रं कविराजमेकं वादीभसिंहं वरपूज्यपादम् ।
भट्टाकलंकं जित-बौद्धवादं प्रभादिचन्द्रं सुकविं प्रवन्दे ॥८॥

श्रीपद्मनन्दी क्रमतस्ततोऽभूत् सद्भव्यपद्मप्रविकाससूर. ।
तत्पट्टके श्रीसकलादिकीर्ति. कीर्तिव्रजव्याप्तदिगंतराल. ॥८॥

पट्टे तदीये भुवनादिकीर्तिः तपोविधानाप्तसुकीर्तिमूर्तिम् ।
श्रीज्ञानभूषं मुनिपं तदीये पट्टे प्रवदे विदितार्थतत्त्वम् ॥१०॥

पट्टे तदीये विजयादिकीर्ति कामारिनिर्नाशनलब्धकीर्ति ।
तदीयपट्टे शुभचन्द्रदेव. कवित्ववादित्वविधानदेव ॥११॥

सुमतिकीर्तिरभूद्वरतत्पदे सुमतिसद्वृषदेशनतत्पर. ।
सुगुणकीर्तिरिहास्य पदे वरे जयंति सूरिरनेकगुणोत्कर ॥१२॥

तत्पट्टे वादिभूषाख्या विद्यते वदतांवर. ।
कर्णाटे यन्नृपैः पूज्यो जैनैर्जयतु मद्गुरु. ॥१३॥

तच्छिष्यो ज्ञानकीर्त्याख्योऽहं सूरिपदसंस्थित ।
करिष्ये चरितसारं यशोधरमहीपते. ॥१४॥

दोर्दंण्डचण्डबलत्रासितशत्रुलोको रत्नादिदानपरिपोषितपात्रसंघः ।
दीनानुवृत्तिशरणागतदीर्घशोक. पृथ्व्या बभूव नृपतिर्वरमानसिंह. ॥१५॥

दोर्दंण्डचण्डबल त्रासितशत्रुलोको रत्नादिदानपरिपोषितपात्रश्रोघ. ।
दीनानुवृत्तिशरणागतदीर्घशोक पृथ्व्या बभूव नृपतिर्वरमानसिंह ।१६।

तस्य चितीश्वरपतेरधिकारि [वर्गे] श्रीजैनवेश्मकृत[दुर्लभ] पुण्यधारी ।
यात्रादिधर्मशुभकर्मपथानुचारी, जैनो बभूव वनिजा वर इभ्यमुख्य. ।१७।

खण्डेलवालान्वय एव गोत्रे गोधाभिधे रूपसुचन्द्रपुत्र ।
दाता गुणज्ञो जिनपूजनेन्द्रो सिवारिधौतारिकदवपक. ॥१८॥

रायात्कुबेर मदनं स्वरूपेणार्कं प्रतापेन त्रिधुं सुसौम्यात् ।
ऐश्वर्यता वासवमर्चयापि तिरस्करोतीह जिनेन्द्रभक्त. ॥१९॥

नानूसुनामा जगतीप्रसिद्धो यो मौलिबद्धावनिनाथतुल्य ।
स्ववंशवाताध्वंविकारुसूरोऽस्यप्रार्थनातो क्रियते मयैतत् ॥२०॥

इत्थं जिनेन्द्रागमसद्गुरून् वै प्रणम्य भक्त्या चरितं पवित्रं ।
वक्ष्ये समासेन यशोधरस्य राज्ञो जनन्या सहितस्य चित्रं ॥२१॥
श्रीसोमदेवैर्हरिषेणसंज्ञैः श्रीवादिराजैश्च प्रभंजनैश्च ।
धनंजयैर्यत्कविपुष्पदन्तैः श्रीवासवाद्यैरिह सेनसंज्ञैः ॥२२॥
प्रकाशितं गद्य-सुपद्यबंधैः संक्षेपविस्तारसुगूढभावैः ।
न्यायागमाध्यात्मविशिष्ट-शब्द-शास्त्राब्धिपारं प्रगतैर्महद्भिः ॥२३॥
कवीश्वरैर्वादिभिरप्यजेयैर्वागीश्वरैर्जीवगुरुप्रतुल्यैः ।
मया कथं तद्गदितुं प्रशक्यं स्वल्पेन बोधेन विशिष्टभावं ॥२४॥
तथापि तद् गुण-ग्रामस्मरणार्जितपुण्यत. ।
स्तोकं सारं प्रवक्ष्यामि स्वस्य शक्त्यनुसारतः ॥२५॥

× × × ×

अन्तभाग :—

चंपादिपुर्या. सविधे सुदेशे बंगाभिधासुन्दरता दधाने ।
ख्याते पुरेऽकच्छ(ब्ब)रनामके च चैत्यालये श्रीपुरुतीर्थपस्य ॥५७॥
श्रीमूलसंघे च सरस्वतीति गच्छे, वलात्कारगणे प्रसिद्धे ।
श्रीकुन्दकुन्दान्वयके यतीश. श्रीवादिभूषो जयतीह लोके ॥५८॥
तद्गुरुबन्धुर्भुवनसमर्च्य. पंकजकीर्तिः परमपवित्रः ।
सूरिपदाप्तो मदनविमुक्तः सद्गुणराशिर्जयतु चिरं स. ॥५९॥
शिष्यस्तयोर्ज्ञानसुकीर्तिनामा श्रीसूरिरत्राल्पसुशास्त्रवेत्ता ।
चरित्रमेतद्रचित च तेनाऽऽचन्द्रार्कतारं जयताद्धरित्र्यां ॥६० ॥
शते षोडशएकोनषष्ठिवत्सरके शुभे ।
माघे शुक्लेऽपि पंचम्यां रचितं भृगुवासरे ॥६१॥
राजाधिराजोऽत्र तदा विभाति श्रीमानसिंहो जित-वैरिवर्गः ।
अनेकराजेन्द्रविनम्यपादः स्वदानसंतर्पितविश्वलोकः ॥६२॥
प्रतापसूर्यस्तपतीह यस्य द्विषां शिरस्सुप्रविधाय पादं ।
अन्याय-दुर्ध्वान्तमपास्य दूरं पद्माकरं यः प्रविकाशयेच्च ॥६३॥

तस्यैव राज्ञोऽस्ति महानमात्यो नानू सुनामा विदितो धरित्र्यां ।
सम्मेदशृंगे च जिनेन्द्रगेहमष्टापदे वादिमचक्रधारी ॥६४॥
यो कारयद्यत्र च तीर्थनाथा सिद्धिंगता विंशतिमानयुक्ताः ।

तत्प्रार्थनां च संप्राप्य जयवंतबुधस्य च ।
आग्रहाद्रचितं चैतच्चरित्रं जयताच्चिरं ॥६६॥

श्रीवीरदेवोऽस्तु शिवाय ते हि श्रीपद्मकीर्तीष्टविधायको य. ।
श्रीज्ञानकीर्तिप्रविवंद्यपादो नानू स्ववर्गेण युतस्य नित्यम् ॥६७॥

इति श्रीयशोधरमहाराजचरिते भट्टारकश्रीवादिभूषणशिष्याचार्यश्रीज्ञान-कीर्तिविरचिते राजाधिराज-महाराज-मानसिंह-प्रधान-साह-श्रीनानूनामांकिते भट्टारकश्रीअभयरुच्यादि-दीक्षाग्रहणस्वर्गादि-प्राप्तिवर्णनो नाम नवमः सर्ग. ॥

---

# परिशिष्ट

## १

## जैनग्रन्थप्रशस्ति संग्रहके ग्रन्थ और ग्रन्थकार

## २

# प्रशस्ति संग्रहमें उल्लिखित संघ, गण और गच्छ



---

## ४

## उल्लिखित वंश, अन्वय, गोत्र और जाति

५

## उल्लिखित देश, नगर, ग्राम, राजा और पर्वत

## ६

## प्रशस्तिसंग्रहमें उल्लिखित जिनालय तथा पर्व आदि



---

## ७

## प्रशस्तिसंग्रहमें उल्लिखित देवी-देवता

# प्रशस्तिसंग्रहमें उल्लिखित आचार्य, भट्टारक और विद्वान्

---

## ६

## प्रशस्तिसंग्रहमें उल्लिखित राजा और राजमंत्री

---

## १०

## प्रशस्तिसंग्रहमें उल्लिखित श्रावक और श्राविका